Dr. Ram ... 

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

१३२

# उत्तररामचरितादर्शः

## ( प्रश्नोत्तरात्मकः )

लेखक

**डॉ० रमाशङ्कर मिश्र**

आचार्य ( नव्यव्याकरण, साहित्य, वेदान्त )

एम.ए. ( संस्कृत ), विद्यावारिधि ( पी-एच. डी. ), वाचस्पति ( डी. लिट्. )

श्रीहरदेवदास नथमल बैरोलिया आदर्श संस्कृत महाविद्यालय,

टेढ़ीनीम, वाराणसी

**चौखम्बा सुरभारती प्रकाशन**

वाराणसी

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

१३२

# उत्तररामचरितादर्शः

## ( प्रश्नोत्तरात्मकः )

लेखक

डॉ० रमाशङ्कर मिश्र

आचार्य ( नव्यव्याकरण, साहित्य, वेदान्त )

एम. ए. ( संस्कृत ), विद्यावारिधि ( पी-एच. डी.

श्रीहरदेवदास नथमल वैरोलिया आदर्श संस्कृत महाविद्यालय

टेढ़ीनीम, वाराणसी

चौखम्बा सुरभारती प्रकाशन

वाराणसी

प्रकाशक

**चौखम्बा सुरभारती प्रकाशन**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ३३३४३१

**सर्वाधिकार प्रकाशकाधीन**

**पुनर्मुद्रित संस्करण 2001 ई.**

**मूल्य 35.00**

अन्य प्राप्तिस्थान

**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए., जवाहरनगर, बंगलो रोड

दिल्ली ११०००७

दूरभाष : 3956391

*

प्रधान वितरक

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ३२०४०४

मुद्रक

**श्रीजी मुद्रणालय**

वाराणसी

# यत्किञ्चित्

अवतु वो गिरिसुता शशिभृतः प्रियतमा ।
वसतु मे हृदि सदा भगवतः पदयुगम् ॥

अयि सुरभारतीसमाराधनतत्पराः सुधियः !

अवगच्छन्त्येव भवन्तो यन्महाकविना भवभूतिना प्रणीतेषु नाटक-निचयेषु 'उत्तररामचरितम्' इत्यभिधानतः प्रथितं नाटकं सर्वातिशायि महत्त्वं भजत इत्यत्र नास्ति काचित् विप्रतिपत्तिः। नाटकस्यास्य किमपि विशिष्टं महत्त्वं विभाव्यैवेदं नाटकं सम्यगनुशीलनाय यत्र तत्र विभिन्न-परीक्षायां विनिर्धारितं शेमुषीजुषैः। एतावता सर्वथा छात्रहितकामनया प्रश्नोत्तरात्मकरूपेण 'उत्तररामचरितादर्शः' इत्याख्यं पुस्तकमहं व्यरच-यम् । एतेन छात्राणां मनागपि हितं भविष्यति चेत् स्वकीयं श्रमं सफलमहं मन्ये ।

पुस्तकस्यास्य प्रणयनावसरे श्रीवल्लभदासशाह-श्रीसेतुबन्धपाण्डेय-डा. श्रीभाष्यपाण्डेयप्रभृतिमहोदयेभ्यः नैकविधसाहाय्यं सत्परामर्शञ्चाहमध्य-गच्छम् । एतावता एभ्यः साधुवादान् वितरामि । अन्ते मुद्रणकार्ये त्वरा सम्पादनाय चौखम्बासुरभारतीप्रकाशनाध्यक्षेभ्यः साधुवादं प्रोच्य विरमामीति शम् ।

कार्तिकीपूर्णिमा, सं० २०४४
सी. के. ६४।३६ ए, हीरापुरा,
जालपादेवी रोड, वाराणसी

विदुषामनुचरः
डा० रमाशंकर मिश्रः

# विषय-सूची

## समालोचनात्मको भागः

## व्याख्यात्मको भागः

॥ श्रीः ॥

# उत्तररामचरितादर्शः

## समालोचनात्मको भागः

( १ ) प्रश्नः—उत्तररामचरितस्य प्रणेतुर्भवभूतेः परिचयः समासेन देयः ।

उत्तरम्—सुरभारत्यां नाटकानां प्रणेतृषु प्रथितयशसः भवभूतेः जीवनस्य परिचयस्तस्य कृतिष्वेकतमस्य महावीरचरितस्य प्रस्तावनाभागात् यत्किञ्चित् समासाद्यते । यथा—

'अस्ति दक्षिणपथे पद्मपुरं नाम नगरम् । तत्र केचित्तैत्तिरीयाः कश्यपाश्चरण-मुखः पङ्क्तिपावनाः पञ्चाग्नयो धृतव्रताः सोमपीथिनाः 'उदुम्बरनामानो' ब्रह्म-वादिनः प्रतिवसन्ति । तदाऽमुष्यायणस्य तत्रभवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्तेर्नीलकण्ठस्यात्मसम्भवः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतुकर्णीपुत्रः' । ( महावीर-चरितम्, प्रस्तावना ) ।

प्रस्तावनयाऽनया विज्ञायते यत् कश्यपगोत्रप्रसूतस्य विप्रवंशावतंसस्य भव-भूतेः पितुर्नाम नीलकण्ठो जनन्या अभिधानञ्च जातुकर्णी आसीत् । पितामहो-ऽस्य भट्टगोपालनाम्ना प्रथितो बभूव । विदर्भदेशस्थपद्मपुराख्यनगरमधिवस-तोऽस्य गुरुः 'ज्ञाननिधिः' स्वकीयं नामानं याथातथ्येन सार्थकतामापादयति स्म । यथा—

'श्रेष्ठः परमहंसानां महर्षीणां यथाऽङ्गिराः ।<br>यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः ॥'—महावीर० १।५

अन्यच्च—

'गुणैः सतां न मम को गुणः प्रख्यापितो भवेत् ।<br>यथार्थनामा भगवान् यस्य ज्ञाननिधिर्गुरुः ॥'

एवम्भूतस्य पदवाक्यप्रमाणज्ञस्य 'श्रीकण्ठ' इत्युपाधिविभूषितस्य भवभूतेरभिधानमप्यन्वर्थकमासीदित्यत्र नास्ति काचित् संशीतिः। यथा—

'श्रीकण्ठपदलाञ्छनः—पितृकृतनामेदम्। भवभूतिर्नाम 'साम्बा पुनातु भवभूतिपवित्रमूर्तिः' श्लोकरचनासन्तुष्टेन राज्ञा 'भवभूति'रिति ख्यापितः'। (वीरराघव)

अथवा 'किञ्चास्मै कवये ईश्वर एव भिक्षुरूपेणागत्य भूतिं दत्तवानिति वदन्ति। एवं च भवान् भगवतो भूतिर्यस्येति 'भवभूति'रित्यन्वर्थ इत्याहुः'। (वीरराघव)

अनन्तनामा कोविदः स्वस्य 'आर्यासप्तशती' इत्याख्यपुस्तकस्य टीकायां रससिद्धकवीश्वरस्य भवभूतेर्नाम 'श्रीधरः' इति मनुते। यथा—

'श्रीधर' इति कविनाम। 'भवभूति'रिति 'गिरिजायाः कुचौ वन्दे भवभूतिसिताननौ' इति प्रकरणोत्तरं पदवीनाम। (आर्यासप्तशती, श्लोक १।३६)

भवभूतेः पाण्डित्यं तु भुवनप्रथितं विद्यते। स नैकेषां शास्त्राणां पारदृश्वाऽऽसीत्। 'गीर्वाणाधिष्ठात्री देवी सरस्वतीस्तदधीना आसीदि'त्यस्य समुद्घोषं स स्वयमेव विदधाति। यथा—

> 'यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते।
> उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते॥'—उत्तररामच० १।२

अन्यच्च—

> 'यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
> ज्ञानं तत्कथनेन किं नहि ततः कश्चिद् गुणो नाटके।
> यत्प्रौढित्वमुदारता च वचसां यच्चार्थतो गौरवं
> तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्धयोः॥'
>
> —मा० मा० १।१६

एतेन निदर्शनेन भवभूतेः सर्वशास्त्रेषु निपुणता सुतरां सिद्धयति।

**भवभूतेः समयः**—भवभूतिः कान्यकुब्जाधिपतेः यशोवर्मणः आश्रितः कविरासीदिति कल्हणाभिमतम्। यथा—

> 'कविर्वाक्पतिराजश्री भवभूत्यादिसेवितः।
> जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम्॥'
>
> —राजतरङ्गिणी ४।१४४

यशोवर्मणः कालः ७३६ ईसवीयान्तिकं विद्यते । काश्मीरभूपतिः ललितादित्यः यशोवर्माणं पराजित्य राज्यमधिगतवानिति जनश्रुतिः । अयमेव हेतुः यद् वाक्पतिराजप्रणीतं 'गौडवहो' इत्याख्यं प्राकृत काव्यं मध्येऽवसितं संदृश्यते । वाक्पतिराजः स्वीये प्राकृते काव्ये भवभूतेः परां प्रशसां कुरुते । यथा—

भवभूइ-जलहि-णिग्गअ-कव्वामय-रसकणा इव फ्फुरन्ति ।
जस्स विसेसा अज्जवि, वियडेसु कहाणिवेसेसु ॥
[ भवभूति-जलधिनिर्गतकाव्यामृतरसकणा इव स्फुरन्ति ।
यस्य विशेषमद्यापि, विकटेषु कथानिवेशेषु ॥ ]

—गौडवहो, ७९

एतेन विज्ञायते यद् भवभूतिः वाक्पतिराजस्य पूर्ववर्ती आसीत्तथा तावत्कालपर्यन्तं स परमां प्रथितिं लेभे । स्वीये हर्षचरिते बाणभट्टो भास-कालिदास-भट्टारहरिश्चन्द्रप्रभृतीनामिव भवभूतेरभिधानं न कीर्तयति । अष्टमशतके प्रादुर्भूतो वामनस्तदीयग्रन्थतः स्वकीये ग्रन्थे उदाहरणमुपन्यस्यति । नवमशतकोत्पन्नो राजशेखरः स्वीये बालरामायणे—

'बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेण्ठताम् ।
स्थितः पुनर्यो भवभूतिरेखया, स वर्तते सम्प्रति राजशेखरः' ॥—१।१६

इति प्रोच्याऽऽत्मानं भवभूतेरवतारमङ्गीकरोति । इत्यमेभिः साक्ष्यैः सूक्ष्मेक्षिकया परीक्षणेन भवभूतेः कालः सप्तमशतकासन्नः प्रतीयत इति शम् ।

**( २ ) प्रश्नः—भवभूतेः रूपकाणां परिचयं समासेनोपस्थापयन्तु ।**

**उत्तरम्**—महाकवेः भवभूतेः कृतित्रयं साम्प्रतं सम्प्राप्यते—१. महावीरचरितम्, २. उत्तररामचरितम्, ३. मालतीमाधवञ्चेति । तत्र प्रथमं नाटकं महावीरचरितमित्यालोचका अनुमिन्वन्ति । अयमेव हेतुः यत् यदा महावीरचरितस्य तीक्ष्णा समालोचना तत्कालोद्भवैः समालोचकैः सम्प्रस्तुता तदाऽयं महाकविस्तान् धर्षयन्निव निजगाद—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां,
जानन्तु ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति तु मम कोऽपि समानधर्मा,
कालो ह्ययं निरवधिविपुला च पृथ्वी' ॥ इति ।

अन्यच्च—

'यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः' । इति च ।

सुधीजनानां सम्प्रीतये तत्प्रणीतानां रूपकाणां कथावस्त्वत्र समासेन निरूप्यते।

१. महावीरचरितम्—एतन्नामकं नाटकं रामायणीयां दशाननव्यापादनान्तां कथां समाश्रित्य महाकविना प्रणीतम्। अस्मिन्नाटके सप्ताङ्काः राजन्ते। नाटकस्यादावेव महाकविः दशाननं मैथिलीपरिणयाभिलाषुकं चित्रयित्वा संघर्षस्यावतारणां विहितवान्। यदा रामश्चापं भङ्क्त्वा जानक्या साकं परिणयं विदधाति, तदा दशाऽऽस्यस्तस्मै भृशं क्रुध्यति। तस्मिन्नवसरे तदमात्यो माल्यवान् कूटनीतेः प्रयोगं कुरुते। प्रथमं स रामं प्रति कोपयित्वा परशुरामं प्रहिणोति, परं यदा सा नीतिः सफला न भवति, तदा रावणभगिनीं शूर्पणखां मन्थरावेषे सम्प्रेष्य कैकेय्या रामं काननं सम्प्रस्थापयति। वने निवासं कुर्वन् माल्यवान् एव सीताया अपहरणं कारयन् बालिनं रामचन्द्रेण साकं सङ्गरं विधातुं सम्प्रेरयति। तत्र रणप्रसङ्गे बाली रामेण व्यापादितः। तदनन्तरं रामचन्द्रः सुग्रीवसाहाय्येन लङ्कामुपेत्य रावणञ्च यमलोकं सम्प्रेष्य पुष्पकयानेन साकेतनगरीं प्रति परावर्तते। जनाः निगदन्ति यद् भवभूतिना स्वकवित्वाभ्याससमये रूपकमिदं विरचितम्। निजकल्पनाबलेन च रामायणकथायां नाटकोपयोगि परिवर्तनं विहितम्। मालतीमाधवगतं कल्पनासौष्ठवं तथोत्तररामचरितगतो रसपरिपाकश्च यद्यप्यत्र न संदृश्यते, तथापि कथानकंचात्र नितान्तहृदयावर्जकम्। अत्राऽकारणविस्तृता राजनीतेर्विवेचना उद्वेगमिव जनयति। पात्राणां दीर्घैर्भाषणैः कथावस्त्वन्तर्हितमिव प्रतीयते। चरित्रचित्रणदृष्ट्या नाटकमिदं न तथा श्लाघनीयं यथा महाकवेः रूपकान्तरम्।

२. उत्तररामचरितम्—नाटकस्याऽस्य 'उत्तररामचरितम्' इति नामकरणेन प्रतीयते यद् रामायणोत्तरकाण्डगता कथाऽत्र चारुतया समुपनिबद्धा विद्यते, परमत्र नाटकोपयोगि परिवर्तनमपि कृतमवलोक्यते। तत्र प्रमुखतमानि परिवर्तनान्यधोऽङ्कितानि समवलोक्यन्ते। यथा—१. प्रथमतश्चित्रसंदर्शनम्, २. अदृश्यया जानकीदेव्या वासन्तीरामचन्द्रयोः कथालापश्रवणम्, ३. वासन्तीसमक्षं रामचन्द्रेण निजहृदयानुरागस्य मैथिलीमात्रविषयकत्वप्रकटनम्, ४. लव-चन्द्रकेतुसङ्गरम्, ५. वसिष्ठादेः प्राचेतसाश्रमगमनम्, ६. रामचन्द्रसमक्षं तदीयचरितस्यैवाभिनयञ्चेति। अस्मिन्नाटकेऽपि सप्ताङ्काः विद्यन्ते। नाटकमिदं भवभूतेर्द्वितीयं रूपकं तस्य प्रौढा कृतिश्च। भवभूतिः नाट्यपरम्पराया अनुकरणं विधाय नाटकमिदं सुखान्तं विहितवान्। कवित्वे परां प्रौढिमासाद्यैव भवभूतिना रूपकमिदं प्रणीतम्। अस्मिन् विषये तेन स्वयमेव समुद्घोषितम्—

'शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम्' ।

एतस्मिन्नाटके 'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इति सुधियां भणितिः सर्वथा सार्थकतामधिगच्छति ।

३. मालतीमाधवम्—दशभिरङ्कैः प्रणीतमिदमेकं विशालं प्रकरणम् । प्रकरणेऽस्मिन् कविकल्पनाप्रसूतयोर्मालतीमाधवयोः प्रेमाऽतिसुन्दरप्रकारेणावतार्य महाकविना वर्णितः । मालतीमाधवश्चेत्युभावेकस्मिन् मदनोत्सवे सम्मिल्य परस्परमनुरागं कुरुतः । यौवने उन्मत्तस्य प्रेम्णोऽत्र प्रगाढं निदर्शनम् । माधवेन मालतीवियोगे क्रियमाणाः विलापाः विक्रमोर्वशीयं नाम कालिदासीयं नाटकं स्मारयन्ति । नवमेऽङ्के स्वप्रियतमां प्रति सन्देशं प्रेषयितुं माधवेनानुरुध्यमानो जलदो मेघदूतकाव्यसंस्मरणाय पाठकान् प्रसभं प्रेरयति । 'ओजः समासभूयस्त्वमेतद्गद्यस्य जीवितम्' इति ब्रुवाणो रीतिकारो भवभूतिनाऽस्मिन् प्रकरणे दीर्घसमासां गद्यावलिं प्रयुज्य बहु सम्भावितः । भारतीयनाट्यपरम्परां चेतसिकृत्य महाकविः भवभूतिः मालतीमाधवयोः परिणयं कारयित्वा नाटकं सुखान्तं विदधातीति शम् ।

( ३ ) प्रश्नः—उत्तररामचरितस्य वैशिष्ट्यञ्चारुतया वर्णयन्तु ।

अथवा

'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इति सूक्तिं समालोचनीया ।

उत्तरम्—संस्कृतनाटकप्रणेतृषु महाकवेः भवभूतेर्नाम सुरभारती-विपन्मण्डलेऽम्बरमणिभास्कर इव विद्योतत इति सर्वेषां सुधियां सम्मतिः । तत्प्रणीतमुत्तररामचरितं नाम नाटकं रूपकव्रातेषु सर्वातिशायि कमप्यनिर्वचनीयं महत्त्वं वैशिष्ट्यञ्च स्वस्मिन् संधारयन् सुधीनां चेतांसि रञ्जयति । नाटकस्यास्य कथावस्तु रामायणीयां कथां समाश्रित्य प्रवर्तते, परमस्मिन् कथावस्तुनि महाकविः स्वकीयप्रतिभावैशद्येन प्रभूतं परिवर्तनं विहितवानिति सर्वे सुधियो विदन्त्येव । पद्मपुराणे वर्णिताभिः रामकथाभिः साकमुत्तररामचरितस्य कथा संवदति । एतावता रूपकस्यास्य कथावस्तु पद्मपुराणाद् संगृहीता इति केषाञ्चिद् विदुषामभिमतम् । नाटकस्यास्य सुखपर्यवसानमादावेव चित्रदर्शनाख्यस्य प्रथमाङ्कस्य 'सर्वथा ऋषयो देवताश्च श्रेयो विधास्यन्ती'ति वाक्येन कोविदा अनुमिन्वन्ति ।

चरित्रचित्रणदृशा नाटकमिदं पर्याप्तं साफल्यमधिगच्छति । नाटकस्यास्य नायकः प्रजापालको रामः प्रजाहितसंसिद्धये स्वकीयं सर्वस्वं समर्पणाय चेष्टमानः संदृश्यते । यथा—

'स्नेहं दयाञ्च सौख्यं च यदि वा जानकीमपि ।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा' ॥

नायिका सीता अपि करुणस्य मूर्तिरिव शरीरिणी विरहव्यथेव स्वीयया लोकोत्तरतेजसा नाटकस्य प्रतिक्षेत्रं प्रोद्भासयति । रूपकेऽस्मिन् रामानुजो लक्ष्मणः नियोगानुवर्ती सदाचारनिष्ठः प्रकृत्या गभीरश्च चित्रितो विद्यते । नाटकेऽस्मिन् प्रकृतिदुरवापाणां विषयाणां कृते स्थानं न समवलोक्यते । करुणारसस्रोतस्वती च सर्वत्र समानरूपेण प्रवहन्तीव परिलक्ष्यते । करुणाविरहितानां जनानामपि लोचनानि महाकविना भवभूतिना प्रणीतमुत्तररामचरितं नाटकं सम्यगधीत्य बाष्पजलसम्पूरितानि भवन्त्येव ।

करुणरसैकपक्षपातिनो भवभूतेः करुणरसोद्रेकं समवलोक्य सचेतसः सुधियः कविवरेण्यमेनं मुक्तकण्ठेन प्रशंसन्ति । आर्यासप्तशत्यां श्रीगोवर्धनाचार्यो महाकविं भवभूतिमभिलक्ष्य—

'भवभूतेः सम्बन्धात् भूधरभूरेव भारती भाति ।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा ? ॥'

इत्येवंरूपेण प्रशंसावचनं निगदति । महाकविः भवभूतिः स्वीये उत्तररामचरिते सीतामुद्दिश्य राममुखेन दाम्पत्यस्नेहस्य प्रशंसां कारयन् व्यञ्जनया स्वस्मिन् नाटकविषयेऽपि सङ्केतयति । यथा—

'अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥'

अयम्भावः—उत्तररामचरितसदृशं मङ्गलप्रदं नाटकं काठिन्येन दर्शनाय पठनाय वा सम्प्राप्यते । नाटकमिदं सर्वास्ववस्थासु सुखदुःखयोरनुपममद्वैतञ्च विद्यते । अस्मिन् सर्वत्र सततञ्चानन्दस्य करुणायाश्च स्रोतस्विनी प्रवाहिता भवति । नाटकमेनं दर्शनेन श्रवणेन पठनेन च स्वान्तमतीव विश्रान्ति लभते । कुत्रापि रसस्याविच्छिन्ना धारा अवरुद्धा न सञ्जायते । हृदये सत्त्वोद्रेकात् तमस आवरणभङ्गाच्च नाटकमिदं प्रेमतत्त्वसमन्वितं प्रतिभाति ।

इत्थमिदं भवभूतिप्रणीतमुत्तररामचरितमिति नाम्ना प्रथितं नाटकं नाट्यशास्त्रदृशा सर्वातिशायि इत्यत्र नास्ति काचित् संशीतिः । रूपकमिदं चेतसिकृत्य वयं वक्तुं पारयामो यद् महाकविः भवभूतिः कवीश्वरं कालिदासमप्यतिशेते ।

मानवीयमनोभावानामन्तःस्थितेश्च यादृग्मनोहारि मनोवैज्ञानिकं सूक्ष्मं विश्लेषणमत्र सम्प्राप्यते तादृगन्यत्र सुदुष्प्रापम् । एतत्सर्वं सूक्ष्मेक्षिकया मनसि विभाव्य सुधीभिर्महाकवेः विषये 'उत्तरे रामचरिते भवभूतिर्विशिष्यते' इति यन्निगदितं तत्तु नितरां तथ्यमावहतीति शम् ।

**( ४ ) प्रश्नः—'प्रकृतिचित्रणे महाकविः भवभूतिः कियान् क्षमः ?' इति विषयमवलम्ब्य स्वकीयं विचारं प्रकटयन्तु ।**

अथवा

**उत्तररामचरितस्य प्रकृतिचित्रणं विधीयताम् ।**

**उत्तरम्**—प्रकृतिचित्रणदृशा 'उत्तररामचरितम्' इति नाम्ना प्रथितं नाटकमिदं कमप्यनिर्वचनीयं महत्त्वं धत्ते—इति प्रेक्षावतामभिप्रायः । महाकविः भवभूतिरत्र प्रकृतेः मनोरमं चित्रणं विदधाति । इह मयूरोऽपि सीतायाः स्मरणं करोति । तरवश्च प्रसूनैः रामायाऽर्घ्यं समर्पयन्ति । रामस्य परिदेवनानन्तरं प्रस्तरा अपि विलपन्ति । नाटकेऽस्मिन् द्रुमाः मृगाश्चापि सीता-रामयोः बान्धवा विद्यन्ते । यथा—

यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुकन्दरनिर्झराणि
गोदावरीपरिसरस्य गिरेस्तटानि ॥—उ० रा० ३।८

कविवरेण्योऽयं प्रकृत्याः कोमलपक्षस्य चित्रणेन साकं भीषणतमपक्षस्यापि चित्रणं कुरुते । निदर्शनरूपेण द्वितीयाङ्कस्याधोऽङ्कितं श्लोकं सुधियोऽत्रलोकन्तु—

'निष्कूजस्तिमिताः क्वचित्क्वचिदसि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताऽग्नयः ।
सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते' ॥ २।१६ ॥

इत्थमेव दिवसस्य मध्यभागे भगवतो भास्करस्य प्रखरकिरणसन्तप्तत्वमतिदुःसहत्वञ्च प्रदर्शयितुं वासन्तीकथनं विदुषां प्रमोदाय प्रकृतेः भीषणतमपक्षस्य च निदर्शनाय पर्याप्तं भविष्यति । यथा—

'कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभिः
घर्मस्रंसितबन्धनैश्च कुसुमैरर्चन्ति गोदावरीम् ।

छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः' ॥ २।९ ॥

अयम्भावः—गोदावर्याः नद्यास्तटयोरुभयभागे बहवस्तरवः संस्थिताः विद्यन्ते। तेषां कोटरेषु खगाः स्वकीयं नीडं निर्माय निवसन्ति। रविप्रतापस्य दुःसहत्वात् वायसादयः पक्षिणश्छायायां स्वप्रकृत्यनुरूपं चञ्चुभिः किमपि खाद्यं गवेषयितुं महीं विदारयन्ति। महीरुहाणां त्वग्भ्यश्चेतस्ततो कीटान् समाकर्षन्ति। ताम्रचूडाः कपोताश्च कूजन्ति। अपि च घर्माधिक्यात् प्रसूनानां बन्धनानि शिथिलतामापादयन्ति। वन्याः वारणाः समागत्येतस्ततो खण्डस्य कण्डूतिमपाकर्तुं पादपान् संघर्षन्ति। तेषामाघातप्रत्याघातैः परिकम्पितेभ्यस्तरुभ्यः प्रसूनानि गोदावर्याः पयसि परिपतन्ति। तदनन्तरं महाकविः भवभूतिरत्रोत्प्रेक्षते—यदिमे तरवः स्वप्रसूनैर्मन्ये भगवतीं गोदावरीं पूजयन्तीति। इत्थं सूक्ष्मेक्षिकया महाकवि-भवभूति-प्रणीतस्योत्तररामचरितस्य परिशीलनं विधाय वयं समासेन वक्तुं शक्नुमो यद् यत्र कविकुलगुरुः कालिदासः प्रकृतेर्ललितं कोमलं च पक्षं स्वकवितायाः विषयतां नयति, तत्र महाकविः भवभूतिः प्रकृतेर्विकटमुग्रं च पक्षं स्वकवितायाः विषयतां प्रापयतीति शम्।

**( ५ ) प्रश्नः—'कारुण्यं भवभूतिरेव तनुते' इति विषयमवलम्ब्य निबन्धमेकं प्रणयन्तु।**

अथवा

**उत्तररामचरितस्य करुणरसं विवेचयन्तु।**

अथवा

**'एको रसः करुण एव' इत्यस्मिन् विषये स्वकीयं विचारं प्रकटयन्तु।**

**उत्तरम्**—भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति।
एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा' ॥

संस्कृतसाहित्ये करुणरसनिर्वचने महाकवेः भवभूतेस्तदेव स्थानं यत् शृङ्गाररसवर्णने कविताकामिनीकान्तस्य कविकुलगुरोः कालिदासस्य। विश्वविदितयशसः कविवरेण्यस्य भवभूतेः करुणरसः सर्वस्वभूतो विद्यते। एतावता तस्य रसस्य च प्राधान्यं महाकविः स्वयमेव समुद्घोषयति। यथा—

'एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक्पृथगिवाश्रयते विवर्तान्।

आवर्तबुद्बुदतरङ्गमयान् विकारा-
नम्भो यथा सलिलमेव हि तत्समस्तम् ॥'

—उ० रा० ३।४७

कविपुङ्गवोऽयं स्वयं तमसामुखेन करुणरसस्य प्राधान्यं रससार्वभौमत्वञ्च संसूचयति। तथा चान्ये रसास्तु तद्विकृतय एव विद्यन्त इत्यस्य वर्णनं विदधाति। उत्तररामचरिते करुणरसः पराकाष्ठां गत इव प्रतिभाति। निदर्शनाय सुधियोऽधोऽङ्कितं श्लोकं पश्यन्तु—

'हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि' ॥

—उ० रा० ३।३८

इत्थमेव जानकीवियोगसन्तप्तस्य रामचन्द्रस्य स्थितिमवधार्य प्रस्तरोऽपि परिदेवनं विदधाति, वज्रस्यापि हृदयं विदलितं भवति। यथा चित्रदर्शनाख्ये प्रथमेऽङ्के रामानुजो लक्ष्मणः निगदति—

'अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथावृत्तं पापैर्व्यथयति यथा क्षालितमपि।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्' ॥

—उ० रा० १।२८

अनेनैव प्रकारेण तृतीयेऽङ्के जानकीवियोगजन्यं रामस्य करुणरसं पुटपाकसदृशं मुरला स्वसखीं तमसां प्रति वर्णयति। यथा—

'अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः' ॥ —उ० रा० ३।१

राम आत्मनः नृशंसकर्मकारित्वं संसूचयन् स्वकीयं जीवनं दुःखसंवेदनायैव मनुते। यथा—

'अपूर्वकर्मचण्डालमयि मुग्धे ! विमुञ्च माम्।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम्' ॥

अथवा—दुःखसंवेदनायैव रामे चैतन्यमागतम्।
मर्मोपघातिभिः प्राणैर्वज्रकीलायितं हृदि' ॥—उ० रा० १।४६ ४७

पञ्चवटीं प्रेक्ष्य रामस्य शोकः प्रत्यग्र इव भूत्वा तस्य मानसं व्यथयति। यथा—

'चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित्संवेगात् प्रचल इव शल्यस्य शकलः।
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः
पुराभूतः शोको विकलयति मां नूतन इव॥' उ० रा० २।२६

मैथिलीपरित्यागशोकसमन्वितस्य भगवतो रामस्य दयनीयां दशां चित्रयन् राममुखेनैव महाकविः भवभूतिः निगदति। यथा—

'दलति हृदयं शोकोद्वेगाद् द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्'॥—उ० रा० ३।३१

नाटकेऽस्मिन् न केवलः राम एव शोकसम्पीडितो विद्यते प्रत्युत परित्यक्ता जानकी अपि करुणस्य मूर्तिरिव शरीरिणी विरहव्यथेव संदृश्यते। यथा तृतीयेऽङ्के गोदावरीह्रदान्निर्गच्छन्तीं सीतां समवलोक्य तमसा स्वसखीं मुरलां प्रति ब्रूते—

'परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम्।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी'॥

—उ० रा० ३।४

इत्थमुत्तररामचरिते महाकविना भवभूतिना प्रवाहितां करुणरसनिर्झरिणीं निर्वर्ण्य सूक्ष्मेक्षिकया सम्यगनुशील्य च वयं वक्तुं पारयामो यदयं महाकविः करुण-रसनिर्वचनेऽतीवपटुः सिद्धहस्तश्च विद्यते। आदिकवेः वाल्मीकेरपि कवितातटिनी करुणरसादेव निर्गता इति सर्वे सुधियोऽवगच्छन्त्येव। यथा—

'मा निषाद प्रतिष्ठां त्वमगमः शाश्वती समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्'॥

एतत्सर्वं परिशीलनेनेदं तथ्यं समक्षमायाति यत् संस्कृतवाङ्मये करुणरसस्य महत्त्वपूर्णं स्थानं विद्यते। महाकविः भवभूतिस्तु करुणरसस्याचार्य एव प्रतिभाति। महाकवेरस्य प्रशंसायां 'कारुण्यं भवभूतिरेव तनुते' इति विद्वन्मण्डलेषु प्रथिता सूक्तिः सर्वथा समीचीनतामञ्चति। अत एव केनचित् कविवरेण्येन स्थान एवोक्तम्—

'जडानामपि चैतन्यं भवभूतेरभूद् गिरा।
ग्रावाप्यरोदीत् पार्वत्याः हसतः स्म स्तनावपि' ॥

एतावताऽन्ते सुधियां सम्मोदाय—

'भव्यां यदि भवभूति तात कामयसे तदा।
भवभूतिपदे चित्तमविलम्बं निवेशय।' ॥

इमां सूक्ति स्मारं-स्मारं विरमामीति शम्।

( ६ ) **प्रश्नः—भवभूतेः काव्यशैलीं समाश्रित्य स्वकीयं विचारं प्रकटयन्तु।**

**उत्तरम्**—संस्कृतसाहित्याकाशे महाकविः भवभूतिः कविताकामिनीकान्तः कविकुलगुरुः कालिदास इव विद्योतमानोऽतिभावुकः कविरस्ति। कविवरेण्योऽयं स्वकीयासु रचनासु प्रौढतायाः, वाण्या औदार्यस्य, अर्थगौरवस्य च धारात्रयात्मिकां तटिनीं प्रवाहितवान्। कस्यामपि रचनायामेतेषां गुणत्रयाणां सद्भावस्तस्या उत्कर्षत्वं द्योतयति। महाकविः भवभूतिः स्वकीये मालतीमाधवाख्ये नाटके तारस्वरेण समुद्घोषयन् सिद्धान्तमेनं द्रढयति। यथा—

'यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
ज्ञानं तत्कथनेन किं नहि ततः कश्चित् गुणो नाटके।
यत्प्रौढित्वमुदारता च वचसां यच्चार्थतो गौरवम्
तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः' ॥

—मा० मा० १।८

काव्यसंरचनायै 'वैदर्भी-गौड़ी-पाञ्चाली'रिति त्रिविधात्मिका शैली काव्यशास्त्रतत्त्वविद्भिरङ्गीकृता। एतासु 'वैदर्भी-गौडी'त्येतेत्युभयात्मिकां शैलीं समाश्रित्य महाकविः भवभूतिः स्वकीयानां नाटकानां संरचनां विहितवान्। लालित्ययुक्तपदविन्यासेन कोमलकान्तपदावल्या समासरहितेन वाक्येन च समन्विता रचना वैदर्भीरित्यङ्गीक्रियते कोविदैः। एतद्विपरीतं गौडीरित्याख्यायां शैल्यामोजो गुणस्य दीर्घकायसमन्वितसमस्तपदावल्याश्च प्रयोगो विधीयते सुधीभिः। सुधीनां सम्प्रीतये वैदर्भीरित्याख्यायाः शैल्याः निदर्शनभूतमधोऽङ्कितं श्लोकं प्रस्तौमि—

'वितरति गुरुः प्राज्ञे विद्यां तथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्ति करोत्यपहन्ति वा।
भवति हि पुनर्भूयान् भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहे मनिर्न मृदादयः' ॥

—उ० रा० २।४

इत्थमेव गौडीरित्याख्याया: शैल्या: निदर्शनार्थमधोऽङ्कितस्य श्लोकस्योत्तरार्धं सुधियोऽवलोकयन्तु—

'यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन्दृष्टिर्मम, कलहकामः पुनरयम्।
रणत्कारक्रूरक्वणितगुणगुञ्जद् गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालव्रणमुखः' ॥ —उ० रा० ५।२६

वैदर्भीगौडीरिति द्वयोः सम्प्रयोगोऽत्र कवेर्वैशिष्ट्यम्। महाकवेः भवभूतेः सङ्केतेन भाषा नृत्यति। यथा कविपुङ्गवोऽयं स्वयमेव समुद्घोषयति—

'यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते'॥ —उ० रा० १।२

अनेन प्रकारेण वयं पश्यामो यद् महाकविः भवभूतिरतीव सफलः कविः। एतत्कृतानि उत्तुङ्गपर्वतानां निबिडाटवीनां च वर्णनानि नितान्तहृद्यानि। मनोगतस्य भावस्य वाचि यथावद्विनिवेशनमस्य वैशिष्टयम्। पात्राणां स्वाभाविकचित्रणाय बहु प्रयतितमनेन साफल्यञ्चाधिगतम्। कविवरेण्योऽयं सरलानां सरसानाञ्च हृदयमर्मोद्घाटकानां पद्यानां निर्माणे सिद्धहस्तो विद्यते। एतावतेह दिङ्मात्रमुदाह्रियते—

'किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत्' ॥ —उ० रा० १।२७

सर्वविधचित्रणे सक्षमः महान् कवीश्वरोऽयं सत्स्वपि सर्वविधेषु वृत्तेषु सफलेषु शिखरिण्यां पर्याप्तं साफल्यमधिगतवान्। अत एव एतत्परिभाव्य केनचिद्विदुषा साधूक्तम्—

'भवभूतेः शिखरिणी निरर्गलतरङ्गिणी।
रुचिरा घनसन्दर्भे या मयूरीव नृत्यति'॥ इति।

**( ७ ) प्रश्नः—उत्तररामचरिते प्रथमाङ्कस्य कथासारं समासेन विवेचयन्तु।**

**उत्तरम्**—नान्द्यन्ते सूत्रधारो नाटकप्रणेतुर्महाकवेः भवभूतेः सर्वप्रथमं परिचयं प्रस्तौति। भगवतो रामस्य राज्याऽभिषेकोत्सवप्रसङ्गनिमित्तेन समारब्धा गीतवाद्यादिमङ्गलचर्चा किमर्थं विरतेति सूत्रधारेण सम्पृष्टे सति नटः 'रामेण समामन्त्रिताः सर्वेऽपि ब्रह्मर्ष्यादयः स्व-स्वनिवासस्थानं प्रति निवृत्तवन्तः; एवं च

महाराजरोमपादस्याऽपत्यकृतिकायाः कौशल्याऽऽत्मजायाः शान्तायाः 'स्वामिनः ऋषिपुङ्गवस्य ऋष्यशृङ्गस्य द्वादशवार्षिकसत्रे वसिष्ठाऽधिष्ठिताः भगवतीमरुन्धतीमग्रे विधाय रामजनन्यो गताः, एतावता गीतवाद्यादिमाङ्गलिककृतिर्निवृत्ते'ति प्रोच्य सूत्रधारस्य समाधानं विदधाति। तस्मिन् प्रसङ्ग एव जनकृतं सीताऽपवादं संसूच्य स्वपितुः जनकस्य च स्वदेशप्रयाणेन विमनायमायाः जानक्याः परिसान्त्वनार्थं रामो धर्मासनाद्वासभवनं प्रविशतीति नटः सङ्केतयन् नाटकस्यास्य प्रस्तावनाया अवसानं कुरुते।

प्रस्तावनानन्तरं जनकवियोगसन्तप्तायाः सीतायाः खेदविरामार्थं रामः पर्याप्तं परिसान्त्वयामास। अस्मिन् समय एव ऋष्यशृङ्गाश्रमादष्टावक्राख्यो मुनिः समागच्छत्। स मैथिलीं प्रति महर्षेः वसिष्ठस्य वीरतनयसम्प्राप्तिरूपामाशिषं रामं प्रति चाऽरुन्धत्यादीनां सीतादोहदपूरणं कर्तव्यमिति सन्देशं संसूचितवान्। विदेहनन्दिनीं प्रति च ऋष्यशृङ्गस्य 'सपुत्रां त्वां द्रक्ष्यामी'ति सन्देशमपि निवेदयामास। तथैवाऽष्टावक्रो मुनिः भगवन्तं रामं प्रति 'प्रजाजनाऽनुरञ्जने युक्तः स्या' इति वसिष्ठसन्देशञ्च भणितवान्। रामश्च लोकाऽनुरञ्जनार्थं तथैव प्रतिज्ञातवान्। प्रस्थितेऽष्टावक्रे रामानुजो लक्ष्मणः समागतवान्। स च सीतायाः मनोविनोदार्थं वीथिकायामभिलिखितं रामचरितयुतं चित्रपटं समानिनाय। 'चित्रपटे चरितस्य कियान्भागो विद्यत' इति रामेण सम्पृष्टे सति 'यावदार्याया वह्निशुद्धिरि'ति लक्ष्मणवचनं निशम्य रामो जनकनन्दिनीं समाश्वस्तामकरोत्। मैथिल्या चित्रदर्शनावसरे 'क एत उपरिस्थिता आर्यपुत्रमुपस्तुवन्ती' वेति सम्पृष्टे सति भरताग्रजो लक्ष्मणः 'आर्यस्य कौशिकेन मुनिना ताडकावधे प्रसादीकृतान्येतानि जृम्भकाऽस्त्राणी'ति प्रतिवचनमदात्। रामश्च गर्भिणीं सीतां 'सर्वथेदानीमेतानि त्वत्प्रसूतिमुपस्थास्यन्ती'ति व्याजहार। तदनन्तरं सर्वे परिणयादिवृत्तान्ताऽवबोधकांश्चित्रपटाऽवयवानपश्यन्। रामश्चित्रे भगवतीं भागीरथीं समवलोक्य 'हे देवि! त्वं सीतायां शिवाऽनुध्यानपरा भवे'ति सम्प्रार्थितवान्। अथ तेऽरण्यनिवासकाले प्रागवलोकितान् शैलविटपादिपदार्थान् संदृष्टवन्तः। ततः विदेहजाऽपहरणाऽनन्तरं दाशरथेः रामस्य कारुणिकीमवस्थां लक्ष्मणः भृशमवर्णयत्। जटायुविक्रमप्रदर्शनाऽनन्तरं स माल्यवन्ताऽऽख्याऽचलस्य वर्णनं विहितवान्। ततः परं रामः पुराऽनुभूतवैदेहीविप्रयोगसंस्मरणेन तं न्यवारयत्। मैथिली च पुनः काननसञ्चरणे भागीरथ्यवगाहने च निजदोहदमभिव्यञ्जितवती। रामस्तन्मनोरथसम्पूर्तये लक्ष्मणं समादिदेश। तन्नियोगसम्पादनाय

स्यन्दनं समानेतुं लक्ष्मणे प्रस्थिते सति गर्भभराऽऽलसखिन्ना जानकी सुष्वाप। अत्राऽन्तरे प्रजाजनवृत्तान्तवेदितुं सम्प्रेषितो दुर्मुखाऽऽख्यश्चरो रामोपकण्ठमाजगाम। रामचन्द्रेण सम्पृष्टः सन् सोऽपि भृशं विषादोत्पादकं मैथिलीविषयकं जनापवादमकथयत्। तन्निशम्य रामो मोहमधिगतवान्। पुनः प्राप्तसंज्ञः सन्ननेकधा विललाप। तदनन्तरं लवणत्रासित ऋषिव्रातोऽब्रह्मण्यपदसमुच्चारणपुरस्सरं समुपस्थित इत्युदन्तं समाकर्ण्य लवणवधाय शत्रुघ्नं सम्प्रेषयामास। तदनु 'भगवति देवि! श्लाघ्यां स्वदुहितरं जानकीमवेक्षस्वे'ति महीं सम्प्रार्थ्य रामो रङ्गात् निर्गच्छति। जानकी च प्रबोधाऽनन्तरं, रामस्यान्वेषणं विहितवती। एतदनन्तरं दुर्मुखः समागत्य 'वनप्रयासार्थं सज्जो रथ' इति लक्ष्मणवचनं सीतायै निवेदयामास। विदेहनन्दिनी रघुकुलदेवान् प्रणम्य काननगमनाय प्रयत्नं कृतवती। तदनु सर्वे निर्गच्छन्ति।

**( ८ ) प्रश्नः—उत्तररामचरिते द्वितीयाङ्कस्य कथासारं समासेन वर्णयन्तु।**

**उत्तरम्**—महर्षेः वाल्मीकेराश्रमादध्येतुं पञ्चवटीं सम्प्राप्ताऽऽत्रेयी वनदेवतां सीतावयस्यां वासन्तीमुपाजगाम। वासन्ती चाऽर्घ्यादिना तामात्रेयीं भृशं सत्कृतवती। 'वाल्मीकिमहर्षौ विद्यमाने सति दूरेऽत्राऽगस्त्यादिमहर्षिभ्यो विद्यां प्रापणाय किमर्थमयं प्रयत्नः' इति वासन्त्या सम्पृष्टे सति 'वाल्मीकेराश्रमे केनाऽपि सुरविशेषेण स्तन्यत्यागमात्रके वयसि संस्थितं शिशुद्वयमुपनीतम्। 'कुशो लवश्चे'ति तयोर्नामनी। तयोराजन्मसिद्धानि जृम्भकाऽस्त्राणि विद्यन्ते। महर्षिणा वाल्मीकिना तयोः यथाक्रममुपनयनं यावत् सर्वे संस्काराः सम्पादिताः। तौ चात्यर्थं मेधाविनौ वर्तेते। एतावता ताभ्यां साकमस्मदादीनां पठनयोगो न सम्भाव्यते। एवं च तमसां तरङ्गिणीं प्रति स्नानार्थं प्रस्थितस्य महर्षेः वाल्मीकेः व्याधनिहतक्रौञ्चशोकेन—

> 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
> यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्' ॥

इत्याकारको लोकेऽभूतपूर्वश्लोकः सम्प्रकाशितः। तदनु विधाता रामचरितनिर्माणाय तं समादिदेश। तत्कार्यसम्पादनाय कुत्राऽप्यप्रतिहतं प्रातिभं चक्षुश्च तस्मै महर्षये प्रादात्। एतदनन्तरं वाल्मीकि रामायणं विरचितवान्। इत्थं तत्र विघ्नद्वयसमागमनेनाऽध्ययनं नास्ति सुकरम्' इत्येवंरूपेणात्रेयी प्रतिवचनं दत्तवती। तदन्वात्रेयी वैदेहीसस्मरणेन भृशं दुःखमनुभूतवती। एतदनन्तरं वासन्तीप्रश्ने कृते सति जानक्याः निर्वासनं तदभावे रामस्य सुवर्णमय्या सीता-

प्रतिकृत्याऽश्वमेधयागकरणस्याशेषं वृत्तान्तं विनिवेदितवती। एवञ्च तस्मिन्नेव क्रमे यज्ञियाश्वरक्षणार्थं लक्ष्मणात्मजस्य चन्द्रकेतोश्च सम्प्रेषणमपि वासन्तीं प्रति कथयामास। अत्रान्तरे पञ्चत्वमधिगतविप्रतनयजीवनार्थं तपस्यन्तं शम्बूकाऽऽख्यं शूद्रं हन्तुं रामः पुष्पकयान समारुह्य सञ्चरितुं समारब्धवान्नित्यपि तां प्रति व्याजहार। तत आत्रेयी रङ्गात् निर्गच्छति। एतावन्मात्रात्मिका कथा महाकविना भवभूतिना शुद्धविष्कम्भके चारुतया समुपवर्णिता। तदनु पुष्पकयानसञ्चारिणा रामेण जनस्थाने व्यापादितः शम्बूको दिव्यं रूपं समासाद्य तं स्तुत्या तुष्टाव। एतदनन्तरं शम्बूकेन साकं रामस्य संलापो बभूव। रामस्यादेशेन शम्बूके प्रस्थिते सति सीतासंस्मरणेन बाष्पकण्ठो रामो भृशं विललाप। तदनु शम्बूकः पुनः समागत्य महर्षेरगस्त्यस्य 'मदीयमाश्रमं समागच्छतु भवान्, लोपामुद्रा च प्रतीक्षते, ततः पुष्पकयानेनाऽश्वमेधाय सज्जो भविष्यसी'ति सन्देशं रामाय निवेदितवान्। एतदनन्तरं रामस्तदन्तिकमुपागच्छत्।

**( ९ ) प्रश्नः—उत्तररामचरिते तृतीयाङ्कस्य कथासारं समासेन समुपवर्णयन्तु।**

**उत्तरम्**—मुरलेति नाम्ना प्रथिता तरङ्गिणी लोपामुद्रायाः गोदावरीं प्रति 'रामस्य स्थितिरतीवकरुणापूर्णा विद्यते। प्रतिनिवर्तमानो रामचन्द्रः पञ्चवटीमधिगतः जानक्या साकं पूर्वाऽनुभूतान् प्रदेशान् नियतं पश्येत्। तत्र तस्य कष्टातिशयेनाऽनिष्टमाशङ्कनीयम्। तद्भगवति गोदावरि! भवत्या रामस्य कल्याणसम्पादनाय सावधानतया भवितव्यम्'। इत्याकारकं सन्देशं प्रापयितुं व्रजामी'ति मार्गमिलितां स्वसखीं तमसाऽभिधानां शैवलिनीं कथितवती।

तमसा च मुरलां प्रति निगदितवती—वाल्मीकितपोवनोपकण्ठे रामानुजेन लक्ष्मणेन संत्यक्ता मैथिली पराभवप्रभूतया प्रसवजन्यया च वेदनया युगपदभिभूताऽऽत्मानं भागीरथीप्रवाहे निचिक्षेप। तत्रैव पुत्रद्वयं समुत्पाद्य महीजाह्नवीभ्यामभ्युपपन्ना पातालं समासादिता। स्तन्यत्यागाऽनन्तरं तस्याः सुतद्वितयमपि भागीरथी महर्षये वाल्मीकये स्वयं समर्पितवती। एतर्हि पञ्चवटीमधिगतं रामं सरयूमुखान्निशम्य भगवती गङ्गा लोपामुद्रावत् समाशङ्क्य मैथिल्या साकं केनचित्कृत्यव्यपदेशेन गोदावरीं द्रष्टुमिह सम्प्राप्ता। गङ्गया प्रबोधिता जानकी—'वत्से! अद्य कुशलवयोर्द्वादशवर्षप्रवेशोत्सव वर्तते। एतावता त्वमात्मनः पुराणश्वसुरं भगवन्तं भास्करं स्वकरलूनैः प्रसूनैरुपतिष्ठस्व। भूतलचारिणीं त्वां सुरा अपि न द्रक्ष्यन्ति' इति। अहमपि मैथिलीसंरक्षणार्थं भगवत्या भागीरथ्या

समादिष्टाऽस्मी'ति संलप्योभे अपि रङ्गात् निर्गच्छतः। एतावन्मात्रात्मिका कथा शुद्धविष्कम्भके महाकविना भवभूतिना समुपवर्णिता।

तदनु कुसुमावचयनदत्तचित्ता विदेहनन्दिनी प्रवेशं विधत्ते। सा च वासन्ती-वदनात् पुराऽऽत्मवर्द्धितं वारणपोतं परदन्तावलसमाक्रान्तं समाकर्ण्य ससम्भ्रम पूर्ववदार्यपुत्रं समाह्वयत्। अत्रान्तर एव रामचन्द्रः पुष्पकयानं समारुह्य तत्रो-पागच्छत्। रामवचनं निशम्य सीता समुत्सुका भवति। रामस्य कृशतनुं शोच-नीयाञ्चावस्थां समवलोक्य सीता भृशं मोहमधिगतवती। रामोऽपि तत्र भूयो भूयः परिदेवितवान्, मूर्च्छाञ्चावाप। जानकी च तमसावचसा संज्ञाऽऽधानार्थं रामं स्वहस्तकिसलयेन पस्पर्श। ततोऽधिगतसंज्ञो रामस्तदामर्शनं भृशं संस्तुत-वान्। रामदर्शनं समाशङ्क्य भीता सीता ततोऽपसरणमभिलषति, परं तमसा गङ्गाप्रभावं समुपवर्ण्य तां निवारयति। रामश्च सीतासंस्पर्शमनुभूयाऽपि तामनव-लोक्याऽऽत्मनो भ्रमं विज्ञातवान्। अत्रान्तरे रामो भूयोऽपि सीतासम्पोषित हस्ति-शावकवृत्तान्तं समाकर्ण्य समुत्थितवान्। तदनु वनदेवता वासन्ती रामाऽन्तिकं जगाम। वासन्ती च सीतापोषितगजकलभकविजयं विनिवेदयामास। तदनन्तरं वासन्तीरामयोर्मध्ये संलापो बभूव। अन्तराऽन्तरा च तमसा सीतासंलापश्चापि समजनि। वासन्ती रामं सीतासंवर्द्धितं ससहचरीकं मयूरं दर्शितवती। वासन्ती सीता निर्वासनार्थं रामस्योपालम्भमपि विहितवती। वासन्तीविहितः स पत्युरु-पालम्भः सीतायै नाऽरोचत।

तदनु वासन्ती मैथिल्याः कष्टं सञ्चिन्त्य मोहमधिगतवती। यदा सा रामं प्रति सीतायाः निर्वासनवृत्तान्तं पृष्टवती, तदा रामः 'तादृशे श्वापदाऽऽकीर्णे कानने जानकी नियतं विलुप्ताऽवयवा भवेदि'त्येवंरूपेणोत्तरं प्रदत्तवान्। एतद-नन्तरं रामपरिदेवनं निशम्य वासन्ती धैर्यसंधारणाय तं प्रति विनिवेदयामास। रामो भूयोऽपि मूर्च्छामधिगतवान्। वैदेही च पुनस्तमसोपदेशात् स्वकरकिसलया-ऽऽमर्शनेन लक्ष्मणाग्रजं प्राबोधयत्। प्रबोधं समासाद्य भरताग्रजो रामो वासन्त्यै जानकीप्राप्तिवृत्तान्तं विनिवेदितवान्, परं सा सीतासाक्षात्काराऽभावेन तद्वचनं सत्यं नाऽवेदीत्। निरतिशयशोकसम्भारेण रामो मुहुर्मुहुः विललाप। निजेना-ऽनुष्ठीयमानेऽश्वमेधाऽऽख्ये यागे सहधर्मचारिणीं सुवर्णमयीं सीताप्रतिकृतिं रामो वासन्त्यै वर्णितवान्। तदनन्तरं साकेतनगरीं प्रति प्रस्थातुं रामो वासन्ती-मपृच्छत्। सीता च रामाऽदर्शनेन कातरताऽतिशयमनुभूतवती। वासन्ती च राम-गमनमनुमोदितवती। सरिद्वरा तमसा सर्वरसेषु करुणारसस्य प्राधान्यं प्रतिपादित-

वती । अवसाने च तमसावासन्त्यौ सीतारामौ प्रति स्वशुभाशीषं प्रदत्तवन्त्याविति शम् ।

( १० ) प्रश्नः—उत्तररामचरिते चतुर्थाङ्कस्य कथासारं संस्कृतगिरा समासेनोपवर्णयन्तु ।

उत्तरम्—अस्मिन्नङ्के सर्वप्रथमं महर्षेः वाल्मीकेराश्रमे द्वौ तापसबालकौ परस्परं वार्तालापं कुरुतः । तत्र प्रथमो दाण्डायनः सौधातकिं प्रति वाल्मीकेराश्रमस्य प्रशंसां विदधाति । द्वितीयस्तु सौधातकिराश्रमस्थितस्य स्त्रीसार्थेन समायातस्यातिथेः परिचयं दाण्डायनं प्रति पृच्छति । दाण्डायनश्च 'महर्षेः ऋष्यशृङ्गस्याश्रमात् सारुन्धतीकाभिः दशरथपत्नीभिः साकं समायातोऽयं महर्षिः वसिष्ठः' इति प्रतिवचनमुक्तवान् । सौधातकिश्च महर्षेः वसिष्ठस्य मधुपर्कप्रसङ्गे कपिलायां गोरालम्भनेन तं व्याघ्रत्वेन समुत्प्रेक्षितवान् । दाण्डायनोऽपि श्रौतवचनात् तत्कर्मणः ( मधुपर्के पशुहननस्य ) समर्थनं विहितवान् । सौधातकिश्च पुनरुपालम्भं प्रादात्—'यद्येवं तर्ह्यद्यैव समागतस्य राजर्षेर्जनकस्य कृते दधिमधुत एव सम्पन्नो मधुपर्को न पुनर्वत्सतरी घातिता' । मधुपर्के समांसत्वं यद्यनिवर्तनीयं स्यात्कथमिदं वैषम्यम्' इति । दाण्डायनश्चानिवृत्तमांसानामर्घ्याणां कृत एव मधुपर्कस्य समांसत्वं, निवृत्तमांसस्य कृते तु न—इति प्रतिवचनं जगाद । जनकस्य निवृत्तमांसत्वे हेतुस्तादृशं जानकीदुष्परिणामश्रवणम्, अत एव स वैखानसः संवृत्तः, 'चन्द्रद्वीपाख्यतपोवने कतिपयान्संवत्सरान् यावत् तपश्चचार' इत्यपि प्रत्यपादयत् । यदा सौधातकि 'सम्बन्धिन्या साकं जनकस्य साक्षात्कारोऽभूत् न वा' इति पप्रच्छ, तदा 'महर्षिः वसिष्ठोऽरुन्धतीमुखेन स्वयमुपेत्य जनकस्य दर्शनं करणीयम्—इति कौशल्यां संसूचितवानि'ति दाण्डायनः प्रतिवाक्यमुक्तवान् । तदनु सौधातकिः क्रीडनप्रस्तावं विहितवान्, परं दाण्डायनः 'जनक आश्रमस्य बहिर्वृक्षमूलमधितिष्ठती'ति व्याजहार । एतावन्मात्रं वृत्तान्तं कविना मिश्रविष्कम्भके समुपन्यस्तम् ।

तदनन्तरं जनकः प्रवेशानन्तरं जानक्याः कृते सातिशयं शोकमभिव्यनक्ति । अस्मिलन्नतराल एवारुन्धतीकौसल्याकञ्चुकिनः प्रवेशं कुर्वन्ति । कौशल्या त्रपाधिक्येन सीतावियोगजकष्टाऽतिशयेन च जनकदर्शनं परिहर्तुमियेष । अरुन्धतीकञ्चुकिनौ च कौशल्यां प्राबोधयताम् । एतदनन्तरं राजर्षिः जनकः पार्श्वमुपेत्य प्रणतिपुरःसरञ्चारुन्धतीं संस्तुतवान् । सा तस्मै चाशिषं प्रादात् । तदनु सर्वे जनाः सीतारामविषयिकीं चर्चां कुर्वन्ति । जनकश्च दशरथप्रशंसां कौशल्यायाः

शोचनीयताञ्च प्रतिपाद्य मैथिलीं प्रति रामव्यवहारे क्षोभाऽतिशयं प्रकटीकुर्वन् रामे कोपश्चाभिव्यनक्ति ।

विप्रबालकैः साकं लवस्तत्राजगाम, तदानीं कौशल्यादयः सातिशयोत्कण्ठापुरस्सरं तं समवलोक्य तस्मिन् सीतारामयोराकृतिं गुणांश्च तर्कयामासुः । राजर्षिः जनकश्च कञ्चुकिद्वारा महर्षिं वाल्मीकिं प्रति लवपरिचयं सम्पृष्टवान् । तदनन्तरं वाल्मीकिः 'यथोचितसमये ज्ञानं भविष्यती'ति विनिवेदितवान् । राजकुमारो लवश्च विनयान्वितः सन् जनकादीनामन्तिकमगच्छत् । तत्र तेन सह कौशल्यादीनां संलापो बभूव । आत्मपरिचये सम्पृष्टे सति स सभ्रातृकस्य कुशसमन्वितस्य महर्षेः वाल्मीकेरन्तेवासितामङ्गीचकार । अत्राऽन्तरे यज्ञियाश्वसंरक्षणप्रसङ्गेन लक्ष्मणतनयस्य चन्द्रकेतोरागमनं निशम्याऽरुन्धतीजनकौ तद्दर्शनोत्साहं प्रादर्शयताम् । लवश्च चन्द्रकेतोः परिचयं पृष्टवान् । परिचयप्राप्त्यनन्तरं लवः स्वीयं रामायणकथानैपुण्यं संसूचितवान् । तस्मिन्नेव काले घोटकदर्शनाऽनन्तरं विस्मयान्विताः सन्तो बटवो लवमाकारयन् । लवश्चाश्वमेधहयसंदर्शनाय बटुभिः साकं ततः सविनयं निरगच्छत् । तुरङ्गरक्षकाणां गर्वपूर्णवचनं समाकर्ण्य लवः कुपितो भूत्वाऽश्वं चोरयामास । तदनु चन्द्रकेतोः जनाः लवं भृशमतर्जयन् । स च निर्भीकरूपेण सङ्गराय सन्नद्धो बभूव । एतदनन्तरं सर्वे निर्गच्छन्तीति शम् ।

**( ११ ) प्रश्नः—उत्तररामचरिते पञ्चमाऽङ्कस्य कथासारं समासेन लिखन्तु ।**

**उत्तरम्**—अस्मिन्नङ्के चन्द्रकेतुः सर्वप्रथमं बहुभिस्तुरङ्गरक्षकैः सार्द्धमेकाकित्वेन विग्रहमाचरतः लवस्य विक्रमं सारथिं सुमन्त्रं प्रति प्रशंसति । स्वपृतनापलायनेन च स सातिशयं शोकमनुभूय द्वन्द्वयुद्धार्थं लवं समाह्वयत् । चन्द्रकेतुना साकं सङ्गराय प्रसिते लवे छिद्रं समासाद्य सैनिकास्तमाक्रामन् । तेषां विनिवारणाय लवः जृम्भकाऽस्त्रं तत्याज । स्वानीकिन्याः घोषप्रशमनेन सुमन्त्रः 'लवेन जृम्भकाऽस्त्रं प्रयुक्तमि'ति विचारयामास । गुरुसम्प्रदायप्राप्तव्यानां जृम्भकाऽस्त्राणां प्राप्तिर्लवस्य कथमभूदि'त्यनेन स विस्मयान्वितो बभूव । एतदनन्तर लवचन्द्रकेत्वोर्मध्ये समरभूमावेव प्रणयसम्भाषणं समजायत । सुमन्त्रश्च लवस्य मैथिलीतनयत्वं तर्कयामास । चन्द्रकेतुः 'रणार्थं स्यन्दनमुपविशतु भवान्, भो चेदहमपि रथादवतरामी'ति लवं प्रति विनिवेदयामास । सुमन्त्रश्चन्द्रकेतुं भृशमभिननन्द । अनभ्यस्तरथचर्यत्वव्यपदेशपूर्वकं लवश्च स्यन्दनोपवेशने स्वाऽनिच्छां प्राकटयत् । चन्द्रकेतुश्च स्यन्दनादवतीर्य सुमन्त्रमभिवादयामास । सुमन्त्रश्च तं शुभाशिषा समयुङ्क्त तदनन्तरं लवचन्द्रकेत्वोः संवादो बभूव । लवो हयरक्षणे विनियुक्तानां

पुरुषाणां परुषतरवचनानि निनिन्द। तस्मिन्नेव काले वाल्यादिवधे राम-चरित्रेऽपि किमप्याक्षेपवचनं प्रायुङ्क्त। तदनु द्वावपि सङ्गराय सन्नद्धौ बभूवतुः। अनन्तरं सर्वे निर्गच्छन्तीतिं शम्।

**( १२ ) प्रश्नः—उत्तररामचरिते षष्ठाऽङ्कस्य कथा समासेन लेख्या।**

**उत्तरम्**—अस्मिन्नङ्के सर्वप्रथमं गगनमार्गेण विमानं समारुह्य विद्याधरी-विद्याधरश्चोभौ लवचन्द्रकेत्वोः सङ्ग्रामं संदर्शनाय प्रविशतः। लवचन्द्रकेतुभ्यां प्रयुक्तानामाग्नेयवारुणवायव्यास्त्राणां च प्रशंसां कुरुतः। 'शम्बूकवधाऽनन्तरं तत्रैव रणस्थले भगवान् रामः समागतवान्, तं समवलोक्य चन्द्रकेतुः प्रणतो लवश्च शान्तो बभूव' इत्यस्य वर्णनं विदधाति। महाकविः भवभूतिः एतावन्मात्रात्मिकां कथां मिश्रविष्कम्भके वर्णयति।

गुणगणाऽभिरामो भगवान् रामः पुष्पकयानादवतीर्य प्रणतं चन्द्रकेतुं समालिङ्ग्य कुशलं पप्रच्छ। चन्द्रकेतुश्च प्रत्युत्तरं प्रदाय 'यत्सदृशं मन्मित्रं लवमपि पश्यतु भवान्' इत्यपि विनिवेदयामास। तदनु रामचन्द्रः शुभलक्षणगुणगणभूषितं लवं प्रशशंस। तत्राऽऽत्मीयं कारणविरहितं प्रणयश्चापि संदर्शयामास। राम-महिमाऽतिशयेन विस्मितो भूत्वा लवस्तत्परिचयं चन्द्रकेतु पृष्टवान्। तदानीं चन्द्र-केतुः परिचयनिर्देशमकरोत्। लवकृताऽभिवादनानन्तरं लक्ष्मणाग्रजो रामस्तं समालिङ्गितवान्। राजकुमारो लवः स्वधृष्टतायाः कृते रामं क्षमां प्रार्थयामास। 'क्षत्रियस्यैतद् भूषणमि'ति प्रोच्य रामस्तस्य प्रशंसां विहितवान्।

लवेन जृम्भकास्त्रेषु संहृतेषु भगवान् रामस्तस्मिन् तदस्त्रसम्प्राप्त्या विस्मयान्वितो बभूव। अत्रान्तरे सङ्गरवृत्तान्तं समाकर्ण्य कोपान्वितः सन् कुशस्तत्र समागतवान्। 'रामसन्निधौ शान्तिर्सन्धारणीया' इति निगद्य लवः कुशं प्रति रामपरिचयं दत्तवान्। परिचयमधिगत्य कुशो रामं प्रति प्रणतोऽभूत्, रामश्च तं परिष्वज्य स्वकीयं प्रणयं प्रकटितवान्। कुश-लवयोः राजलक्षणानि समवलोक्य तयोः सीतासादृश्योपलब्ध्या रामः द्वयोः सीतासुतत्वं तर्कयामास। रामनियोगं समासाद्य कुशलवौ रामायणीयश्लोकान् जगदतुः। तदा रामः भृशं शोकमनुबभूव। अत्रान्तरे शिशुकलहं निशम्याऽरुन्धतीवसिष्ठवाल्मीकिकौशल्या-जनकप्रभृतयोऽत्राऽऽगच्छन्तीति समाकर्ण्य रामः शोकभयाऽभिभूतत्वेन तद्दर्शनं प्रति सङ्कुचितचेताः समजायत। तदनु सर्वे निर्गच्छन्तीति शम्।

**( १३ ) प्रश्नः—उत्तररामचरिते सप्तमाऽङ्कस्य कथासारं समासेन वर्णयन्तु।**

**उत्तरम्**—शुभलक्षणसमन्वितो लक्ष्मणो महर्षेः वाल्मीकेरनुरोधात् रामायण-

नाटकमभिनेतुं भगवतो रामस्यादेशेन जाह्नवीतटे समेषां दर्शकानां कृते समुचि
स्थानसन्निवेशमकरोत्। रामोऽपि तत्रागत्य 'कुशलवयोरत्र चन्द्रकेतुरिव समाद
कर्तव्यः' इत्यादिदेश। तदनु सूत्रधारो नाटकं प्रारभते।

अथ लक्ष्मेण श्वापदगणाकीर्णे गहने कानने परित्यक्ताया आसन्नप्रसूतिवेदना
जानक्याः 'गङ्गायामात्मानं पातयिष्यामी'ति वचनं नेपथ्ये सर्वे जनाः शृण्वन्ति
अत्रैव महाकविः प्रस्तावनाया अवसानं विदधाति।

भगवान् रामचन्द्रश्चात्र नाटकाऽभिनीतमप्येवमर्थं याथातथ्येन मत्वा स्वकीय
ऽऽवेगमभिव्यनक्ति। लक्ष्मणश्च तं धैर्यधारणाय विनिवेदयति। ततश्चैकैकमर्भ
स्वकीयेऽङ्के समादाय सीताञ्च समाश्रित्य पृथिवीभागीरथ्यौ प्रविशतः। ते च दे
सीतायै यमलपुत्रोत्पत्तेः सूचनां प्रदत्तवत्यौ। जानकी यमलप्रसवेन सातिशयं
समनुभूय मोहमधिगतवती। रामानुजो लक्ष्मणोऽपि सीताकर्तृके पुत्रप्रसवे
प्रकटितवान्। अत्रान्तरे रामश्च मूर्च्छामवाप। गङ्गाधरण्यौ च जानकीं समाश्व
सयताम्, तत्प्रश्ने स्वकीयपरिचयं च प्रदत्तवत्यौ। ततः सीतां प्रत्यनयाचरणे
संक्षुभिता मही रामं प्रत्युपालम्भं दत्तवती। जाह्नवी च तस्या अनुरोधं विहि
वती। मैथिली च स्वमातरं महीमात्माङ्गविलयमयाचत। क्षितिश्च 'वत्से! अ
क्षणीयौ ते पुत्रकौ' इति तां विनिवेदितवती। तदनु देव्यौ 'अस्मत्तोऽपि जान
पवित्रतरा' इत्यस्योद्घोषमकुरुताम्। अस्मिन्नेवकाले सुदीप्तानि जृम्भकाऽस्त्रा
'चित्रदर्शनक्षणे रामवचनमनुसृत्य वयं त्वत्तनयावाश्रयाम' इति सीतायै न्यवेदयन्
तदनु सीता 'मत्तनयोः क्षात्रसंस्कारं कः विधास्यती'ति बभाष। भागीरथी
'तत्कर्मसम्पादनं वाल्मीकिः करिष्यती'ति कथयामास। लक्ष्मणश्च रामान्ति
कुशलवौ सीतासुतत्वेन तर्कयामास। ततो मैथिली भूयो निजमातरं महीं स्वस्य
स्तदङ्गविलयं संयाचितवती। एतदनन्तरं धरणी 'स्तन्यत्यागं यावत् त्वया तनय
निरीक्षणं विधातव्यम्, पश्चाद्यथा ते रोचिष्यते' इति समादिदेश। तदनन्त
जानकी देवीभ्यां साकं निष्क्रान्ता। अत्रान्तरे सीतातनुत्यागमनुमीय रामो भूयो
ऽपि मूर्च्छामधिगतवान्। रामरक्षायै लक्ष्मणो वाल्मीकिं प्रति सम्प्रार्थयामास
तदनु नेपथ्ये 'आतोद्यमपनीयताम्। सर्वे जनाः महर्षिणा वाल्मीकिनाऽभ्यनुज्ञात
माश्चर्यमवलोकयन्तु' इति वचनमश्रूयत। एतदनन्तरं 'गङ्गामहीभ्यां साकं सीत
देवी जलादुत्तिष्ठती'ति वाक्यं लक्ष्मणो जगाद। नेपथ्ये च 'देव्यरुन्धति
आवाभ्यां भागीरथीवसुन्धराभ्यां पतिव्रता वधूः सीता तवाऽर्पिता' इत्येतद्वाक्
पुनरप्यश्रूयत।

भगवती रामचन्द्रस्य मूर्च्छाऽपगमाऽभावेन सर्वे जनाः खिन्नाः बभूवुः। अरुन्धती च 'स्वकरकिसलयसंस्पर्शेन रामचन्द्रं सञ्जीवये'ति विदेहनन्दिनीं समादिदेश। मैथिल्या तथाऽऽचरितेऽधिगतसंज्ञो रामो जानकीं समवलोक्य भृशं तुतोष, परं स्वपार्श्वं एवारुन्धतीं शान्तामृष्यशृङ्गादीन् गुरुजनांश्चाऽवेक्ष्य त्रपान्वितोऽप्यभूत्।

नेपथ्ये 'भो रामभद्र! आलेख्यसंदर्शनकाले 'सीतायां शिवाऽनुध्यानपरा भवे'ति त्वया यन्निगदितं तथैव मयाऽनुष्ठितमि'ति भागीरथ्या उक्तिर्न्यशाम्यत। भूयोऽपि नेपथ्ये 'आयुष्मत्याः सीतायाः परित्यागकाले 'भगवति वसुन्धरे! श्लाघ्यां दुहितरं जानकीमवेक्षस्वे'ति भवता यथा सम्प्रार्थितं तथैव कार्यं साधितञ्चे'ति धरण्याः वचनमश्रूयत। ततो भगवत्यरुन्धती बहुशः सीतासतीत्वं प्रशस्य 'रामकर्तृके मैथिलीपरिग्रहे वः कीदृशमभिमतमि'ति सर्वान् प्रति सम्पृष्टवती।

रामानुजो लक्ष्मणश्च 'सर्वे पौराः जानपदाश्च प्रजावतीं सतीशिरोमणिं सीतां प्रणमन्ति, लोकपालाः सप्तर्षयश्च प्रसूनवृष्टिभिरुपतिष्ठन्त' इति निजगाद। तदन्वरुन्धती सीतापरिग्रहाय रामचन्द्रं समादिदेश, रामश्चाप्यङ्गीचकार। लक्ष्मणः कृतार्थो भूत्वा जानकीं ननाम, सीता च तं शुभाशिषा संयुयोज। ततोऽरुन्धत्याः वचनेन वाल्मीकिः कुशलवौ चाऽऽनयत्। तनयोर्माता पितृसमागमेन हर्षप्रकर्षः समजनि। मैथिली महर्षिं वाल्मीकिमभिवादयामास, ततश्चाशिषं समवाप। अस्मिन्नेव समये लवणमुन्मूल्य रिपुदमनस्तत्र समाजगाम। वाल्मीकिना 'किं ते भूयः प्रियमाचरामी'ति निगदिते सति भगवान् रामः भवत्कर्तृकेयं कथा पापप्रणाशिनी कल्याणवर्द्धिका च विद्यते, एतावतैना शब्दब्रह्मविदः कवेर्नाटकरूपेण परिणतामियां वाणीं बुधजनाः परिभावयन्त्वि'ति सम्प्रार्थयामास। तदनन्तरं सर्वे निर्गच्छन्तीति शम्।

**( १४ ) प्रश्नः—उत्तरामचरितस्य प्रधाननायकस्य रामचन्द्रस्य चरित्रचित्रणं स्वसंस्कृतगिरा कुर्वन्तु।**

उत्तरम्—नाट्यशास्त्रदृशा भगवान् रामचन्द्रोऽस्य नाटकस्य धीरोदात्तो नायकः विद्यते। महाकविना भवभूतिना स्वकीये उत्तररामचरिताऽऽख्ये नाटके तस्य सर्वोत्कृष्टं चरित्रं चित्रितम्। रामो याथातथ्येनाऽऽदर्शः नृपतिरासीत्। स प्रजाजनानुरञ्जनार्थं सर्वस्वत्यागाय प्रसितो दृश्यते। यथा—

'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा'॥

रामः सीतायाः सतीत्वविषये दृढमवगच्छति स्म, यदियं पतिभक्तिपरायण पतिव्रता चाऽस्ति। यथा स स्वयमेव लक्ष्मणं प्रति निगदति—

'उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः' ॥ १।१३ ॥

तथापि स रामो लोकाराधनाय जनापवाद् भीतो भूत्वा भीषणनियमा पालयन् स्वकीयां दयितां सीतामपि परित्यजति। एतस्मिन् विषये स स्वयञ्चाङ्गी करोति। यथा—

'सतां केनापि कार्येण लोकस्याराधनं परम्।
तत्प्रतीतं हि तातेन मां च प्राणांश्च मुञ्चता' ॥ १।४१ ॥

नाटकेऽस्मिन् रामचन्द्रो दाम्पत्यप्रणयादर्शस्य धृतविग्रह इव संदृश्यते। लोकानुरञ्जनार्थं वह्नेस्तीर्थोदकस्येव पूतां स्वकीयां दयितां सीतां परित्यज्य चेतसि भृशं मानससन्तापमनुभवति। उत्तररामचरितस्य प्रथमेऽङ्के यथा स स्वयमेव हृदि स्थितं भावमुद्गिरति—

'हा देवि देवयजनसम्भवे! हा स्वजन्मानुग्रहपवित्रितवसुन्धरे! हा मुनि जनकनन्दिनि! हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि! हा राममय जीविते! हा महारण्यवासप्रियसखि! हा तातप्रिये! हा स्तोकवादिनि! कथ मेवंविधायास्तवायमीदृशः परिणामः'?

'त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे' ॥ १।४३ ॥

भगवतो रामस्य यादृशो दाम्पत्यस्नेहोऽस्ति, तादृशो दाम्पत्यप्रणयः कथमपि दिष्टया सम्प्राप्यते। महाकविः भवभूतिस्तथ्यमिदं चेतसिकृत्य व्याहरति—

'अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते' ॥ १।३९ ॥

सीतावियोगजन्यं सातिशयं दुःखमनुभवन्नयं रामचन्द्रः कीदृशः प्राकृतजन इव विलपति। सुधियोऽधोलिखिते श्लोके पश्यन्तु—

'हा हा देवि! स्फुटति हृदयं, ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि।

सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि' ॥ ३।३८ ॥

इक्ष्वाकुवंशे समुत्पन्नो रामः कदापि स्वकीयां वंशपरम्परां न विस्मरति। यथा स स्वयमेव निगदति—

'इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः कृत्स्नो लोकः'।

अयमेव हेतुर्यत्स सीतावियोगजसन्तापमनुभवन्नसि स्वकर्तव्यमार्गात् कदापि न विचलति। एतद्वैशिष्ट्यं विभाव्यैव वासन्ती रामं प्रशंसन् स्वकीयं मनोभाव-मुद्गिरति—

'वज्रादपि कठोराणि मृदूनि कुसुमादपि।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥' २।७ ॥

इत्थं वयं पश्यामो यद् मर्यादापालको भगवान् रामचन्द्रः सद्गुणानां रत्नाकरः सन्नपि करुणरसस्य निदर्शनरूपेण राजते। यथोक्तं महाकविना भवभूतिना—

'अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः' ॥ ३।१ ॥

कर्तव्यपालनेऽयं रामचन्द्रोऽतीव निष्ठुरः संदृश्यते। कर्तव्यपालनायैव स शम्बूकस्य वधं विहितवान्। सीतायाः पतिव्रतधर्मः निर्मलो विद्यत इति विदन्नपि लोकानुरञ्जनाय तस्याः परित्यागं विदधाति। एवं समासेनोत्तर-रामचरिते चित्रितो राम आदर्शभूपतिः, मर्यादापालकः, लोकानुरञ्जकश्च विद्यत इति वयं कथयितुं शक्नुम इति शम्।

**( १५ ) प्रश्नः—उत्तररामचरितस्य प्रधाननायिकायाः सीतायाः चरित्र-चित्रणं समासेन स्वसंस्कृतगिरा कुर्वन्तु।**

उत्तरम्—नाट्यशास्त्रदृशा सीता उत्तररामचरितस्य स्वकीया प्रौढा च नायिका विद्यते। सा वसुन्धरायाः समुत्पन्ना राज्ञो जनकस्याऽऽत्मजा चास्ति। एतस्मिन् नाटके सा आदर्शदयितारूपेण, मातृरूपेण शक्तिरूपेण च महाकविना भवभूतिना चित्रिता वर्तते। इयं जानकी पवित्रतायाः पातिव्रतधर्मस्य च साक्षाद्-धृतमूर्तिरिव राजते। सूर्यवंशस्य वधोरेतस्याः विषये ग्रन्थकारः कथयति—

'विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च' ॥ १।९ ॥

जनकात्मजा सीता सातिशया पूता विद्यत इत्यत्र नास्ति काचित् संशीतिः। यतो ह्येतस्याः विषये रामः स्वमुखेनैव निगदति—

'उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः' ॥ १।१३ ॥

अन्यच्च—

'क्लिष्टो जनः किल जनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशुभं च न तत्क्षमं ते।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि' ॥ १।१४ ॥

एतादृशी सीता स्वपत्युः सुखदुःखयोः सहभागिनी, तस्य गेहस्य लक्ष्मीः, रामस्य चातीव प्रिया विद्यत इति सर्वे सुधियोऽङ्गीकुर्वन्ति। भगवान् रामः निजवदनेनैव मैथिलीमभिलक्ष्य व्याहरति—

'इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः' ॥ १।३८ ॥

नाटकेऽस्मिन् यद्यपि जानकी पतिपरायणारूपेण चित्रिता विद्यते, परं तस्यां बहूनां गुणानामाविर्भावः संदृश्यते। गुरुजनान् प्रति तस्या असीमश्रद्धा समवलोक्यते। राज्याभिषेकानन्तरं सम्प्रस्थिते गुरुजने सा औदासीन्यमवलम्बते। एतावता रामस्तां परिसान्त्वनाय प्रयतमानोऽवलोक्यते। यथा—

'स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः' ॥ १।७॥

पशुपक्षिभिः विटपव्रततिभिश्च साकं किमप्यनिर्वचनीयं स्नेहं संधारयती सीता स्वकरेणोदकेनाभिषिञ्च्य नैकान् महीरुहान् पञ्चवट्यां संवर्द्धयामास। प्रकृतिपेशला मैथिली परिपूता सत्यपि लोकापवादेन निर्वासिता भूत्वा भृशं दुःखमनुभूयमाना दीर्घकालिकपतिवियोगेन सन्तप्ता शरीरधारिणीविरहव्यथेव चित्रिता दृश्यते। यथा—

'परिपाण्डुदुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी' ॥ ३।४ ॥

परित्यक्ताऽपि विदेहात्मजा रामं प्रति प्रचुरं प्रणयं दधती सुखदुःखयोस्तस्यैव स्मरणं विदधाति । एवंविधायाः सीतायाः रामं प्रति सातिशयमनुरागमेव कारणरूपेण राजते यद्विश्ववन्दनीया वसिष्ठदयिता अरुन्धती जानकीं प्रशंसन् स्वकीयं मनोभावमभिव्यनक्ति । यथा—

'शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्ति द्रढयति ।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं, न च वयः' ॥ ४।११ ॥

किमधिकम् ? जानक्याः विशुद्धं चरित्रं धरित्री, वैश्वानरः, वाल्मीकादिमुनयः, वसिष्ठधर्मपत्नी अरुन्धती, भगवती भागीरथी, भास्करश्चेमे सर्वे सम्यग्रूपेण विदन्ति । यथाऽस्मिन्नेव नाटके मिथिलाधिपतिः जनको भूतधात्रीमभिलक्ष्याऽधोऽङ्कितै श्लोके व्याहरति—

भगवति वसुन्धरे ! सत्यमतिदृढासि ।

'त्वं वह्निर्मुनयो वसिष्ठगृहिणी, गङ्गा च यस्या विदुर्माहात्म्य यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव यामसूत भवती, शुद्धि गतायाः पुनस्तस्यास्त्वद्दुहितुस्तथा विशसनं किं दारुणे मृष्यथाः' ? ॥ ४।५ ॥

इत्थं समासेन वयं कथयितुं पारयामो यदुत्तररामचरितस्य सीता पत्यावनुरागं दधती पतिव्रता आदर्शस्वरूपा भारतीया नारी विद्यत इति शम् ।

---

## श्लोक-व्याख्यात्मको भागः

### प्रथमोऽङ्कः

(१) इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे ।
विन्देम देवतां वाचममृतामात्मनः कलाम् ॥ १।१ ॥

प्रसङ्गः—महाकविः भवभूतिरत्र प्रारिप्सितग्रन्थस्य निर्विघ्नसमाप्तये पूर्वरङ्गप्रधानाङ्गभूता स्तुतिपाठरूपां नान्दीमवतारयन् सर्वप्रथमं मङ्गलमाचरति ।

अन्वयः—पूर्वेभ्यः कविभ्यः नमोवाकम् 'आत्मनः अमृतां कलां देवतां वाचं विन्देम' इदं प्रशास्महे ।

व्याख्या—पूर्वेभ्यः = प्राचीनेभ्यः, कविभ्यः = काव्यप्रणेतृभ्यः, वाल्मीकिव्यासादिभ्य इत्याशयः, नमोवाकम् = नमोवचनम्, (प्रोच्य) आत्मनः = विधेः, अमृताम् = शाश्वतीम्, कलाम् = अंशभूताम्, देवताम् = दिव्यगुणमयीं सरस्वतीम्, वाचम् = वाणीम्, वाग्देवताम्, विन्देम = प्राप्नुयाम, इदम् = पूर्वोक्तप्रकारकमाशंसनम्, प्रशास्महे = अभिलषामः । अस्मिन् श्लोके कविनिष्ठा गुरुजनविषया भगवद्-विषया च रतिः प्रधानतया विद्यते । पथ्यावक्त्रं नाम वृत्तम्—'यजोर्जेन सरिद्भर्तु पथ्यावक्त्रं प्रकीर्तितम्' इति लक्षणात् ।

(२) यं ब्रह्माणमियं देवी वाग्वश्येवानुवर्तते ।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते ॥ १।२ ॥

प्रसङ्गः—सूत्रधारो महाकवेः भवभूतेरसाधारणपाण्डित्यप्रकर्षं संसूचयितुमिदं पद्यमवतारयति ।

अन्वयः—यं ब्रह्माणम् इयं देवीवाक् वश्या इव अनुवर्तते, तत्प्रणीतम् उत्तरं रामचरितं प्रयोक्ष्यते ।

व्याख्या—यम् = भवभूतिम्, ब्रह्माणम् = विप्रम्, इयम् = सन्निहिता, सुप्रथिता वा, देवीवाक् = वाग्देवी सरस्वती, वश्या = अधीना, इव = यथा, अनुवर्तते = अनुसरति, तत्प्रणीतम् = भवभूतिविरचितम्, उत्तरम् = राज्याभिषेकानन्तरमुत्कृष्टम्, रामचरितम् = रामचरित्रम्, प्रयोक्ष्यते = अभिनेष्यते । वाचो वश्यत्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारोऽत्र । कवेश्चास्य ब्रह्मणा सहोपमानोपमेयभावोऽपि व्यज्यते । पथ्यावक्त्रं नाम वृत्तम् ।

(३) सर्वथा व्यवहर्तव्यं, कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ १।५ ॥

**प्रसङ्गः**—सुपरिशुद्धामुपस्थानस्तोत्रपद्धतिं निरूपयितुं सुदुष्करमिति प्रतिपादनाय सूत्रधारः श्लोकमिमं व्याहरति ।

**अन्वयः**—सर्वथा व्यवहर्तव्यम्, अवचनीयता कुतः ? हि जनः यथा स्त्रीणां, तथा वाचां साधुत्वे दुर्जनः ।

**व्याख्या**—सर्वथा = सर्वविधैः प्रकारैः, व्यवहर्तव्यम् = व्यवहारो विधातव्यः, अवचनीयता = दोषराहित्यम्, कुतः = कस्माद्धेतोः सम्भाव्यते ? बुद्धिमतोऽपि वचने दोषसम्भावना भवत्येवेत्याशयः । हि = निश्चयेन, जनः = प्राकृतो लोकः, यथा = येन प्रकारेण, स्त्रीणाम् = योषिताम्, तथा = तेन प्रकारेण, वाचाम् = वाणीनां विषयेऽपि, साधुत्वे = प्रशंसायाम्, दुर्जनः = दोषदर्शी भूत्वा, संशयं विदधाति । काव्यलिङ्गालङ्कारोऽत्र अनुष्टुब्वृत्तम्—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्विचतुर्थपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥

**( ४ ) देव्या अपि हि वैदेह्याः साऽपवादो यतो जनः ।**
**रक्षोगृहस्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ ११६ ॥**

**प्रसङ्गः**—दुर्जनो जनः स्त्रीणां साधुतायां संशयमनो भवतीति सूत्रधारवाक्ये किमप्याधिक्यं वर्धयितुं नटो निगदति यत् ते दुर्जना अपरेषां दोषदर्शनेनाऽतितमां प्रसीदन्ति । साम्प्रतमेते दुर्जनाः भगवत्याः सीतादेव्या विषयेऽपि निन्दितां चर्चां विदधतीति व्याहरति नटोऽत्र ।

**अन्वयः**—यतो देव्या वैदेह्या अपि जनः सापवादः, रक्षोगृहस्थितिः मूलम्, अग्निशुद्धौ तु अनिश्चयः ।

**व्याख्या**—यतः = यस्माद्धेतोः, देव्याः = भगवत्याः, वैदेह्या अपि = सीतादेव्याः विषयेऽपि, जनः = लोकः, सापवादः = विनिन्दकः, अन्येषां तु का कथा ? रक्षोगृहस्थितिः = रावणभवनसंस्थितिः, मूलम् = कारणम्, अग्निशुद्धौ तु = हुताशनपवित्रतायां विषये तु, अनिश्चयः = संशयः, अस्तीति शेषः । दोषाभावेऽपि दोषकथनाद् 'विभावना' अलङ्कारोऽत्र, अग्निशुद्धावपि तदनिश्चयाद् 'विशेषोक्तिः' इत्यपि । इत्थमनयोः संसृष्टिः । 'अतिदुर्जन' इत्यस्य साधकत्वेनास्य श्लोकस्योक्तौ काव्यलिङ्गालङ्कारोऽपि । अनुष्टुब्वृत्तमत्र, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्विचतुर्थपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥

(५) स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः ॥ १।७ ॥

**प्रसङ्गः**—महाराजो रामः कुत्र विद्यत इति जिज्ञासमानान् लोकान् प्रति नटोऽत्रोत्तरं ब्रूते।

**अन्वयः**—स्नेहात् सभाजयितुम् एत्य अमूनि दिनानि उत्सवेन नीत्वा जनकः अद्य विदेहान् गतः, ततः विमनसः देव्याः परिसान्त्वनाय नरेन्द्रः धर्मासनात् वासगृहं विशति।

**व्याख्या**—स्नेहात् = वात्सल्यातिशयाद्धेतोः, सभाजयितुम् = राममभिनन्दितुम्, एत्य = आगत्य, अमूनि = एतानि, दिनानि = वासराणि, उत्सवेन = राज्याभिषेकोत्सवेन, नीत्वा = व्यतीत्य, जनकः = विदेहाधिपः; अद्य = अस्मिन्वासरे; विदेहान् = विदेहानां जनपदम्, स्वराज्यमित्याशयः, गतः = प्रस्थितः, ततः = तस्माद्धेतोः, पितृगमनकारणाद्वा, विमनसः = क्षुब्धहृदयायाः, देव्याः = स्वपत्न्याः सीतायाः, परिसान्त्वनाय = समाश्वासनाय, नरेन्द्रः = भूपतिः रामचन्द्रः; धर्मासनात् = स्वसिंहासनं परित्यज्य, वासगृहम् = शयनमन्दिरम्, विशति = प्रविशति। स्वभावस्य कथनादत्र स्वभावोक्तिरलङ्कारः। तल्लक्षणं यथा—'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्' इति। वसन्ततिलकावृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' इति लक्षणात्।

(६) किन्त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति।
सङ्कटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ १।८ ॥

**प्रसङ्गः**—सीतां समाश्वासयन् भगवान् रामो राज्ञो जनकस्य स्वदेशगमनं प्रति कारणं विनिर्दिशत्यत्र।

**अन्वयः**—किन्तु अनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति, हि आहिताग्नीनां गृहस्थता प्रत्यवायैः सङ्कटा।

**व्याख्या**—( ते हि गुरवो न शक्नुवन्ति विहातुमस्मान् ) किन्तु = परन्तु, अनुष्ठाननित्यत्वम् = अग्निहोत्रादिनियतकर्तव्यत्वम्, स्वातन्त्र्यम् = स्वतन्त्रताम्, अपकर्षति = दूरीकरोति, हि = निश्चयेन, आहिताः-आधानसंस्कारेण स्थापिताः, अग्नयः = दाक्षिणाग्निगार्हपत्याहवनीयाख्याः, यैस्ते आहिताग्नयस्तेषाम् आहिताग्नीनाम्=अङ्गीकृताग्निहोत्रकर्मणाम्, गृहस्थता=गार्हस्थ्यम्, प्रत्यवायैः = विहिता-

करणजन्यपातकैः, सङ्कटा = सङ्कटग्रस्ता, दुःखरूपा वा, भवतीति शेषः। काव्य-लिङ्गाऽर्थान्तरन्यासालङ्कारयोरङ्गाङ्गिभावसंकरोऽत्र, अनुष्टुब्वृत्तश्च।

(७) विश्वम्भरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते।
तेषां वधूस्त्वमसि नन्दिनि! पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च॥ १।९॥

प्रसङ्गः—रामप्रभृतीनां सर्वेषां प्रश्नानामुत्तरं ददानोऽष्टावक्रो मुनिः विशेष-रूपेण सीतां सम्बोध्य सूर्यवंशस्य गुरोः भगवतो वसिष्ठस्य सन्देशं निगदत्यत्र।

अन्वयः—हे नन्दिनि! भगवती विश्वम्भरा भवतीमसूत, प्रजापतिसमः जन-कस्ते पिता, त्वं तेषां पार्थिवानां वधूः असि, येषां कुलेषु सविता, गुरुः वयं च (गुरवः)।

व्याख्या—हे नन्दिनि! = भो आनन्दप्रदायिनि मैथिलि! भगवती = माहात्म्यवती, विश्वं बिभर्तीति विश्वम्भरा = धरित्री, भवती = त्वाम्, असूत = अजनयत्, प्रजापतिसमः = विधातातुल्यो विदेहाधिपतिः, जनकः = एतन्नामा, ते = तव, पिता = जनकः, विद्यत इति शेषः, त्वम् = जानकी, तेषाम् = प्रथितानाम्, पार्थिवानाम् = भूपतीनाम् वधूः = स्नुषा, असि = वर्तसे, येषाम् = नरपतीनाम्, कुलेषु = वंशेषु, सविता = सूर्यः, गुरुः = वंशप्रवर्तकः, वयं च = अहं वसिष्ठश्च, (गुरवः = उपदेष्टारः, सन्तीति शेषः) अत्रोपमा-समुच्चय-पुनरुक्तवदाभास-इत्येतेषामलङ्काराणामङ्गाङ्गिभावेन साङ्कर्यं विद्यते। वसन्ततिलका नाम वृत्तम्—'उक्ता वसन्ततिलका तभजा जगौ गः' लक्षणात्।

(८) लौकिकानां हि साधूनामर्थं वागनुवर्तते।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति॥ १।१०॥

प्रसङ्गः—शूरपुत्रस्य शुभाशिषं समाकर्ण्य रामचन्द्रः प्रसन्नतां प्रदर्शयन् 'अने-नानुगृहीताः स्म' इति प्रोच्य शुभाशीर्वचनं सत्यं भविष्यतीत्यत्र कारण-मुपन्यस्यति।

अन्वयः—लौकिकानां साधूनां वाक् अर्थम् अनुवर्तते, हि पुनः आद्यानाम् ऋषीणां वाचम् अर्थः अनुधावति।

व्याख्या—लौकिकानाम् = अवैदिकानाम्, प्राकृतानाम्, साधूनाम् = महात्मनाम्, वाक् = वाणी, अर्थम् = वृत्तं वर्तिष्यमाणं वा वस्तु, अनुवर्तते = अनुसरति, हि = यतः, पुनः = परन्तु, आद्यानाम् = वैदिकानाम्, ऋषीणाम् = वसिष्ठादीनां तपोध-

नानाम्, वाचम् = वाणीम्, अर्थः = वस्तु, अनुधावति = अनुसरति। आद्या ऋषयः अर्थानुसन्धानं विनापि यदृच्छया यदभिदधति तपःसिद्धिबलात् तेषां तदेव फलतीत्याशयः। लौकिकसाधूनामपेक्षया ऋषीणां वचसामाधिक्योक्तेर्व्यतिरेकालङ्कारोऽत्र, अप्रस्तुतसाधुवचनवर्णनेन प्रस्तुतश्रीवसिष्ठवचसः प्रशंसया अप्रस्तुतप्रशंसालङ्कारोऽपि, एतावता तयोः सङ्करः। अनुष्टुब्वृत्तमत्र—

'श्लोके षष्ठ गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम्।
द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः'॥ —इति लक्षणात्

(९) जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवं च राज्यम्।
युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः॥

प्रसङ्गः—कुलगुरुणा भगवता वसिष्ठेन साम्प्रति किमप्युपदिष्टं न वेति जिज्ञासासमन्वितं रामं प्रति मुनिरष्टावक्रो वसिष्ठस्य कथनमत्र निगदति।

अन्वयः—जामातृयज्ञेन वयं निरुद्धाः, त्वं बाल एव असि, राज्यं च नवम्, प्रजानाम् अनुरञ्जने युक्तः स्याः, तस्माद् यशः (भविष्यति), यद् वः परमं धनम्।

व्याख्या—जामातृयज्ञेन = ऋष्यशृङ्गयागेन, वयम् = वसिष्ठप्रभृतयः, निरुद्धाः = नियन्त्रिताः, त्वम् = रामः, बालः = बालकः, एव = निश्चयेन, असि = विद्यसे, राज्यं च = राज्यशासनकार्यञ्च, नवम् = नूतनाधिगतम्, (अतः) प्रजानाम् = जनानाम् अनुरञ्जने = सन्तोषणे, युक्तः = सन्नद्धः, स्याः = भवेः, तस्माद् = लोकानुरञ्जनात्, यशः = ख्यातिः, भविष्यतीति शेषः, यद् = यशः, वः = इक्ष्वाकुवंशप्रसूतानां भवताम्, परमम् = सर्वोत्कृष्टम्, धनम् = वित्तम्, विद्यत इति शेषः। समुच्चय-काव्यलिङ्गालङ्कारावत्र वर्तेते। इन्द्रवज्रा वृत्तम्—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति लक्षणात्।

(१०) स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा॥ १।१२॥

प्रसङ्गः—वसिष्ठविहितादेशपालनाय भगवान् रामोऽत्र प्रतिज्ञां विदधाति।

अन्वयः—लोकस्य आराधनाय स्नेहं दयां सौख्यं च, यदि वा जानकीम् अपि मुञ्चतः मे व्यथा न अस्ति।

व्याख्या—लोकस्य = जनस्य, आराधनाय = प्रसादनाय, स्नेहम् = भार्यादिविषयकमनुरागम्, दयाम् = करुणाम्, सौख्यं च = सुखं च, यदि वा = अथवा,

जानकीम् अपि = स्वदयितां सीतामपि, मुञ्चतः = परित्यजतः, मे = मम रामस्य, व्यथा = क्लेशः, न = नहि, अस्ति = विद्यते । एकस्यां 'मुञ्चतः' इति क्रियायां स्नेहादीनामन्वयाद्दीपकालङ्कारोऽत्र । अनुष्टुब्वृत्तमत्र—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥

—इति लक्षणात् ।

( ११ ) उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ? ।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ १।१३ ॥

**प्रसङ्गः**—तत्कियन्तमवधिं यावदार्यस्य चरितमस्यां वीथ्यामभिलिखितमिति प्रश्ने कृते सति 'यावदार्यायाः हुताशनशुद्धिः' इति वज्रवत् कठोरं वचनं लक्ष्मणस्य समाकर्ण्य भगवान् रामः सीतां समाश्वासयितुं निगदत्यत्र ।

**अन्वयः**—उत्पत्तिपरिपूतायाः अस्याः पावनान्तरैः किम् ? तीर्थोदकं वह्नि च अन्यतः शुद्धिं न अर्हतः ।

**व्याख्या**—उत्पत्तिपरिपूतायाः = जन्मनैव शुद्धायाः, अस्याः = जानक्याः, पावनान्तरैः = अग्न्यादिभिरन्यैः पवित्रताकारकैः पदार्थैः, किम् = न किमपि प्रयोजनम्, तीर्थोदकम् = गङ्गादीनां जलम्, वह्निः च = अनलश्च, अन्यतः = पावनान्तरात्, शुद्धिम् = पवित्रताम्, न = नहि, अर्हतः = प्राप्नुतः । सीता-शोधने तीर्थोदक-वह्निदृष्टान्तेन दृष्टान्तालङ्कारोऽत्र, तल्लक्षणं यथा—

'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्' इति अनुष्टुब्वृत्तञ्च ।

( १२ ) क्लिष्टो जनः किल जनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशुभं च न तत्क्षमं ते ।
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ १।१४ ॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० ११ ।

**अन्वयः**—क्लिष्टः जनः जनैः अनुरञ्जनीयः, किल तत् ते नः यत् अशुभम् उक्तम्, तत् न क्षमम्, सुरभिणः कुसुमस्य मूर्ध्नि स्थितिः नैसर्गिकी सिद्धा, चरणैः अवताडनानि न ।

**व्याख्या**—क्लिष्टः = क्लेशसमन्वितः, जनः = लोकः, जनैः = तत्सम्बन्धिभिः सर्वैरपि जनैः, अनुरञ्जनीयः = सन्तोषणीयः, किल = निश्चयेन, तत् = तस्माद्धेतोः,

ते = तव विषये, यत् = यत्किमपि, अशुभम्=अशिवम्, उक्तम् = कथितम्, तत् = वचनम्, न=नहि, क्षमम्=युक्तम्, सुरभिण: = सुगन्धितस्य, कुसुमस्य = प्रसूनस्य, मूर्ध्नि = शिरसि, स्थिति: = अवस्थानम्, नैसर्गिकी = स्वाभाविकी, सिद्धा = लोके प्रथिता, चरणै: = पादै:, अवताडनानि = अवमर्दनानि, न = न नैसर्गिकाणीति भाव: । दृष्टान्तालङ्कारोऽत्र, तल्लक्षणं यथा—

'दृष्टान्तस्तु सधर्मस्य वस्तुन: प्रतिबिम्बनम्' । इति ।

वसन्ततिलका नाम वृत्तम् 'उक्ता वसन्ततिलका तभजा जगौ ग:' इति लक्षणात् ।

**( १३ ) ब्रह्मादयो ब्रह्महिताय तप्त्वा, पर:सहस्रं शरदां तपांसि ।**
**एतान्यदर्शन्गुरव: पुराणा: स्वान्येव तेजांसि तपोमयानि ॥ १।१५ ॥**

प्रसङ्ग:—दिव्यास्त्राणां वन्दनस्यौचित्यं संसूचयितुं सीतां प्रति भगवान् रामचन्द्रोऽत्र निगदति ।

अन्वय:—ब्रह्मादय: पुराणा: गुरव: ब्रह्महिताय पर:सहस्रं शरदां तपांसि तप्त्वा एतानि स्वानि तपोमयानि तेजांसि एव अदर्शन् ।

व्याख्या—ब्रह्मादय:=ब्रह्माप्रभृतय:, पुराणा:=प्राचीना:, गुरव: = आचार्या:, ब्रह्महिताय = वेदसंरक्षणाय, पर:सहस्रम् = सहस्रादधिकम्, शरदाम् = वर्षाणाम्, तपांसि = कायशोषव्रतानि, तप्त्वा = विधाय, एतानि = अस्त्ररूपाणि, स्वानि = स्वकीयानि, तपोमयानि = तप:समुद्भूतानि, तेजांसि = प्रभावान्, एव = निश्चयेन, अदर्शन् = अपश्यन् । उदात्त-भाविक-रूपकालङ्काराणामत्र साङ्कर्यम् । उपजाति नाम वृत्तम्—'स्यादिन्द्रवज्रा यदि तौ जगौ ग:' 'उपेन्द्रवज्रा जतजास्ततो गौ' 'अनन्तरोदीरितलक्ष्मभाजौ, पादौ यदीयावुपजातयस्ता: । इत्थं किलान्यास्वपि मिश्रितासु, वदन्ति जातिष्विदमेव नाम' ॥ इति लक्षणात् ।

**( १४ ) जनकानां रघूणां च सम्बन्ध: कस्य न प्रिय: ।**
**यत्र दाता ग्रहीता च स्वयं कुशिकनन्दन: ॥ १।१७ ॥**

प्रसङ्ग:—चित्रदर्शनप्रसङ्गे रामचन्द्रो जनकानां रघूणाञ्च सम्बन्धविषये स्वाभिमतं सीतां प्रति प्रकटयत्यत्र ।

अन्वय:—जनकानां रघूणां च सम्बन्ध: कस्य प्रिय: न, यत्र स्वयं कुशिकनन्दन: दाता ग्रहीता च ।

व्याख्या—जनकानाम् = जनकवंश्यानाम्, रघूणां च = रघुवंश्यानां राघवाणां

च, सम्बन्धः = वैवाहिकः सम्बन्धः, कस्य = जनस्य, प्रियः = अभीष्टः, न = नास्ति, सर्वस्यैव प्रिय इत्याशयः, यत्र = यस्मिन् सम्बन्धे, स्वयम् = भगवान्, कुशिकनन्दनः = विश्वामित्रः, दाता = कन्यादानस्य कर्ता, ग्रहीता = कन्याग्रहणस्य कर्ता, च विद्यत इति शेषः। सम्बन्धस्य प्रियतां साधयितुमुत्तरार्धस्य हेतुत्वेन वर्णनात् काव्यलिङ्गालङ्कारोऽत्र। विवाहसम्बन्धे महर्षेः विश्वामित्रस्य चरितवर्णनेन उदात्तालङ्कारश्चापि विद्यते। अनुष्टुब्वृत्तञ्च। तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम्।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः'॥ इति।

(१५) समयः स वर्तत इवैष यत्र मां
समनन्दयत् सुमुखि गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः॥ १।१८॥

प्रसङ्गः—सीतादेव्याः मुखात् पुरातनवृत्तान्तं निशम्य भगवान् रामोऽपि तां प्रति तथैव वर्णयति।

अन्वयः—हे सुमुखि ! एषः सः समयः वर्तते इव, यत्र गौतमार्पितः आगृहीतकमनीयकङ्कणः अयं तव करः मूर्तिमान् महोत्सवः इव मां समनन्दयत्।

व्याख्या—हे सुमुखि ! = भो सुवदने ! एषः = अयम्, सः = पूर्वानुभूतः, समयः = कालः, वर्तते इव = विद्यते इव, यत्र = यस्मिन् समये, गौतमार्पितः = शतानन्दसमर्पितः, आगृहीतकमनीयकङ्कणः = धृतसुन्दरपरिणयमङ्गलसूत्रः, अयम् = पुरोवर्तमानः, तव = विदेहनन्दिन्याः, करः = दक्षिणो हस्तः, मूर्तिमान् = विग्रहसमन्वितः, महोत्सवः = विशालोत्सवः, इव = यथा, माम् = रामम्, समनन्दयत् = नितरामानन्दितमकरोत्। उत्प्रेक्षालङ्कारोऽत्र। मञ्जुभाषिणी वृत्तम्, तल्लक्षणं यथा—

'सजसा जगौ भवति मञ्जुभाषिणी'। इति।

(१६) जीवत्सु तातपादेषु नूतने दारसङ्ग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः॥ १।१९॥

प्रसङ्गः—लक्ष्मणमुखेन 'एते वयमयोध्यां प्राप्ताः' इति वचनं समाकर्ण्य स्मृतपूर्ववृत्तान्तः सन् भगवान् रामः पितृमातृसंस्मरणपूर्वकं व्यतीतानां वासराणां सम्बन्धे सास्रं निगदत्यत्र।

**अन्वयः**—तातपादेषु जीवत्सु दारसङ्ग्रहे नूतने मातृभिः चिन्त्यमानानां नः ते हि दिवसाः गताः ।

**व्याख्या**—तातपादेषु = पितृचरणेषु, जीवत्सु = प्राणधारणं कुर्वत्सु, दारसङ्ग्रहे = परिणये, नूतने = अचिरसम्पन्ने सति, मातृभिः = कौशल्याप्रमुखाभिः जननीभिः, चिन्त्यमानानाम् = 'कथमेते सुख प्राप्नुयुः' इति सततमनुध्याय लाल्यमानानाम्, नः = अस्माकम्, ते = पूर्वानुभूताः, हि = निश्चयेन, दिवसाः = दिनानि, गताः = व्यतीताः । अनुष्टुब्वृत्तमत्र, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुर्थपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥ इति ।

( १७ ) **प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलै-**
**र्दशनकुसुमैर्मुग्धालोकं शिशुर्दधती मुखम् ।**
**ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-**
**रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः ॥ १।२० ॥**

**प्रसङ्गः**—पूज्ये पितरि जीवति सति पितृ मातृ-सुखन्तु आसीदेव, परमियं जानकी देव्यपि तदानीं मातृणां सुख-प्रमोदयोः कारणमासीदिति विनिर्दिशति भगवान् रामचन्द्रोऽत्र ।

**अन्वयः**—प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलैः दशनकुसुमैः मुग्धालोकं मुखं दधती ( इयं ) शिशुः ललितललितैः ज्योत्स्नाप्रायैः अकृत्रिमविभ्रमैः मधुरैः अङ्गकैः मे अम्बानां च कुतूहलम् अकृत ।

**व्याख्या**—प्रतनुविरलैः = सूक्ष्माऽनतिनिबिडैश्च, प्रान्तोन्मीलन्मनोहरकुन्तलैः = उभयकपोलशोभमानसुन्दरकेशैः, दशनकुसुमैः = रदप्रसूनैः, मुग्धालोकम् = मनोहरदर्शनम्, मुखम् = आननम्, दधती = धारयन्ती, ( इयं = जानकी ) शिशुः = शैशवे वर्तमाना, ललितललितैः = अतिमनोहरैः, ज्योत्स्नाप्रायैः = चन्द्रिकासदृशैः, अकृत्रिमविभ्रमैः = स्वाभाविकविलासैः, मधुरैः = प्रीतिजनकैः, अङ्गकैः = अल्पैरङ्गैः, मे = मम, अम्बानां च = मातृणां च, कुतूहलम् = दर्शनौत्सुक्यम्, अकृत = कृतवती । लुप्तोपमाऽलङ्कारोऽत्र, हरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसयुगहयैर्न्सौम्रौस्लौगो यदा हरिणी तदा' ॥ इति ।

( १८ ) **पुत्रसङ्क्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम् ।**
**धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥ १।२२ ॥**

प्रसङ्गः—सीतायाः मुखात् जटासंयमनवृत्तान्तचर्चा समाकर्ण्य लक्ष्मणोऽत्र रामं प्रति निगदति ।

अन्वयः—पुत्रसङ्क्रान्तलक्ष्मीकैः वृद्धेक्ष्वाकुभिः यत् धृतं तत् पुण्यम् आरण्यकव्रतम् आर्येण बाल्ये धृतम् ।

व्याख्या—पुत्रसङ्क्रान्तलक्ष्मीकैः=तनयप्रतिष्ठापितराज्यभारैः, वृद्धेक्ष्वाकुभिः =वार्द्धक्याधिगतैरिक्ष्वाकुवंशजैः, यत्=व्रतम्, धृतम्=स्वीकृतम्, तत्=पूर्वनिगदितं व्रतम्, पुण्यम्=पुण्यजनकम्, आरण्यकव्रतम्=वानप्रस्थव्रतम्, आर्येण =पूज्येन भगवता रामचन्द्रेण, बाल्ये=प्रथमे वयसि बाल्यावस्थायामेव, धृतम् =अङ्गीकृतम् । वृद्धेक्ष्वाकूणामपेक्षया बालस्यार्यस्याधिक्यवर्णनाद् व्यतिरेकालङ्कारोऽत्र । अनुष्टुब्वृत्तम्, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥ इति ।

( १९ ) तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसा रोषात्प्लुष्टान्पितुश्च पितामहान् ।
अगणिततनूतापस्तप्त्वा तपांसि भगीरथो
भगवति ! तव स्पृष्टानद्भिश्चिरादुदतीतरत् ॥ १।२१ ॥

प्रसङ्गः—रघुकुलस्य देवतां भगवतीं भागीरथीं प्रणम्य भगवान् रामचन्द्रः प्राचीनेतिहासनिरूपणपुरस्सरं गङ्गायाः सविशेषं महिमानमत्र चारुतया समुपवर्णयति ।

अन्वयः—भगवति ! भगीरथः अगणिततनूतापः ( सन् ) तपांसि तप्त्वा तव अद्भिः स्पृष्टान् सगराध्वरे तुरगविचयव्यग्रान् उर्वीभिदः रोषात् कपिलमहसा प्लुष्टान् पितुः पितामहान् चिरात् उदतीतरत् ।

व्याख्या—भगवति !=भो ऐश्वर्यशालिनि गङ्गे ! भगीरथः=दिलीपतनयः, अगणिततनूतापः=अविचारितशरीरसन्तापः, ( सन् ) तपांसि=तपः, तप्त्वा= चरित्वा, तव=भवत्याः गङ्गायाः, अद्भिः=वारिभिः, स्पृष्टान्=अभिषिक्तान्, सगराध्वरे=सगराख्यभूपतेः यागे, तुरगविचयव्यग्रान्=अश्वमेधीयहयान्वेषणव्यापृतान्, उर्वीभिदः=महीविदारकान्, रोषात्=कोपात्, कपिलमहसा= कपिलाख्यमहामुनेस्तेजसा, प्लुष्टान्=दग्धान्, पितुः=दिलीपस्य, पितामहान्= सगरात्मजान्, चिरात्=दीर्घकालानन्तरम्, उदतीतरत्=उद्धारयामास, स्वर्गं

प्रापयामासेति भावः । भागीरथ्याः वर्णनेन सगरात्मजानां महिमाऽनुकीर्तनादुदात्ता-
लङ्कारोऽत्र । हरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसयुगहयैर्न्सौम्रौस्लौगो यदा हरिणी तदा' । इति ।

( २० ) अलसललितमुग्धान्यध्वसम्पातखेदा-
दशिथिलपरिरम्भैर्दत्तसंवाहनानि ।
परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ १।२४ ॥

**प्रसङ्गः**—विटपपादपं सस्पृहं समवलोकयन्तं रामचन्द्रं वीक्ष्य 'स्मरति वा तं प्रदेशमार्यपुत्रः' ? इति जिज्ञासासमन्विता सीतां प्रति 'अयि, कथं विस्मर्यते' इति प्रोच्य भगवान् रामोऽत्र विस्मरणाभावस्य कारणं विनिर्दिशति ।

**अन्वयः**—यत्र त्वम् अध्वसम्पातखेदात् अलसललितमुग्धानि अशिथिलपरिरम्भैः दत्तसंवाहनानि परिमृदितमृणालीदुर्बलानि अङ्गकानि मम उरसि कृत्वा निद्राम् अवाप्ता ।

**व्याख्या**—यत्र = यस्मिन् प्रदेशे, त्वम् = जानकी, अध्वसम्पातखेदात् = मार्ग-गमनपरिश्रमात्, अलसललितमुग्धानि = आलस्ययुतकोमलमनोहराणि, अशिथिल-परिरम्भैः = सुदृढालिङ्गनैः, दत्तसंवाहनानि = वितीर्णसम्मर्दनानि, परिमृदित-मृणालीदुर्बलानि = निष्पिष्टविसकिसलयकृशानि, अङ्गकानि = स्वगात्राणि, मम = रामचन्द्रस्य, उरसि = वक्षसि, कृत्वा = विधाय, निद्राम् = स्वापम्, अवाप्ता = अधिगतवती । उपमाऽलङ्कारोऽत्र । मालिनी नाम वृत्तम्, तल्लक्षणं यथा—

'ननमयययुतेयं मालिनी भोगिलोकैः' । इति ।

( २१ ) एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि ।
येष्वातिथेयपरमा यमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ १।२५ ॥

**प्रसङ्गः**—भगवान् श्रीरामः सीतां प्रति दक्षिणारण्यसम्पदः समुपवर्णयितुं समारभतेऽत्र ।

**अन्वयः**—गिरिनिर्झरिणीतटेषु वैखानसाश्रिततरूणि एतानि तानि तपोवनानि येषु आतिथेयपरमाः नीवारमुष्टिपचनाः यमिनः गृहिणः गृहाणि भजन्ते ।

**व्याख्या**—गिरिनिर्झरिणीतटेषु = पर्वतस्रोतस्विनीतीरभूमिषु, वैखानसाश्रित-तरूणि = वानप्रस्थयतिसमधिष्ठितवृक्षाः, एतानि = चित्रलिखितानि, तानि =

प्रथितानि, तपोवनानि = तपस्याकाननानि, येषु = तपोवनेषु, आतिथेयपरमाः = अतिथिसत्कारतत्परतः; नीवारमुष्टिपचनाः = मुष्टिपरिमिततृणधान्यपाकमात्रेण शरीरस्थितिं कुर्वन्तः; यमिनः = अहिंसादिनियमपालकाः, गृहिणः = सदाराः मुनयः, गृहाणि = पर्णशालाः; भजन्ते = अध्यासते । उदात्तालङ्कारोऽत्र । वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' । इति ।

**( २२ ) स्मरसि सुतनु ! तस्मिन्पर्वते लक्ष्मणेन**
**प्रतिविहितसपर्यासुस्थयोस्तान्यहानि ।**
**स्मरसि सरसनीरां तत्र गोदावरीं वा**
**स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥ १।२६ ॥**

**प्रसङ्गः**—पूर्वं भृशं समनुभूतानां स्थानादिसुखानां संस्मरणं कारयितुं मैथिलीं प्रति भगवान् रामचन्द्रोऽत्र ब्रूते ।

**अन्वयः**—हे सुतनु ! तस्मिन् पर्वते लक्ष्मणेन प्रतिविहितसपर्यासुस्थयोः आवयोः तानि अहानि स्मरसि किम् ? अथवा तत्र सरसनीरां गोदावरीं स्मरसि ? तदुपान्तेषु आवयोः वर्तनानि च स्मरसि ?

**व्याख्या**—शोभना तनूर्यस्याः सा सुतनूः, तत्सम्बुद्धौ हे सुतनु ! = भो सुगात्रि ! तस्मिन् पर्वते = प्रस्रवणाख्ये गिरौ, लक्ष्मणेन = सौमित्रिणा, प्रतिविहितसपर्यासुस्थयोः = अभीक्ष्णसम्पादितपूजाप्रसन्नचित्तयोः, आवयोः; तानि = व्यपगतानि, अहानि = वासराणि, स्मरसि किम् ? = संस्मरणं विदधासि किम् ? अथवा, तत्र = तस्मिन् शैले, सरसनीराम् = सुस्वादुतोयाम्, गोदावरीम् = एतन्नाम्नीं सरिद्वराम्, स्मरसि ? = स्मरणं करोषि ? तदुपान्तेषु = गोदावरीसमीपभागेषु, आवयोः = सीतारामयोः, वर्तनानि = भ्रमणानि, च स्मरसि ? = संस्मरणं विदधासि किम् ? दीपकालङ्कारोऽत्र । मालिनी नाम वृत्तम्, 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ।

**( २३ ) किमपि किमपि मन्दं मन्दमासत्तियोगा-**
**दविरलितकपोलं जल्पतोरक्रमेण ।**
**अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-**
**रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ १।२७ ॥**

**प्रसङ्गः**—श्रीरामः पुनरपि पूर्वमनुभूतानां पदार्थानां स्मरणं कारयितुं जानकीमभिलक्ष्य निगदत्यत्र ।

**अन्वयः**—आसत्तियोगात् अविरलितकपोलम् अक्रमेण मन्दं-मन्दं किमपि किमपि जल्पतः, ( तथा ) अशिथिलपरिरम्भव्यापृतैकैकदोष्णोः ( आवयोः ) अविदितगतयामा रात्रिः एव व्यरंसीत् ।

**व्याख्या**—आसत्तियोगात्=सामीप्यसम्बन्धात्, अविरलितकपोलम्=परस्पर-संसक्तगण्डम्, अक्रमेण=पौर्वापर्यराहित्येन, मन्दं-मन्दं=शनैः-शनैः, किमपि किमपि=यत्किञ्चिद्, जल्पतः=संलापं कुर्वतः, ( तथा ) अशिथिलपरिरम्भ-व्यापृतैकैकदोष्णोः=गाढालिङ्गननिरतैकैकबाह्वोः, ( आवयोः=सीतारामयोः ) अविदितगतयामा=अज्ञातव्यतीतप्रहरा:, रात्रि एव=निशा एव, व्यरंसीत्=विरराम । प्रविगता आसीदित्याशयः । 'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूप-वर्णनम्' इति लक्षणानुसारेण स्वभावोक्तिरलङ्कारोऽत्र ! मालिनी नाम वृत्तम् तल्लक्षणं यथा—

'ननमयययुतेयं मालिनी भोगिलोकैः' । इति ।

( २४ ) अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथावृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ १।२८ ॥

**प्रसङ्गः**—मैथिलीवचनाद्धीरस्यापि रामचन्द्रस्य जनस्थानवृत्तान्तसंस्मरणेन खिन्नचेतसस्तस्य 'हन्त, वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति' इति वचन समाकर्ण्य लक्ष्मणोऽत्र निगदति ।

**अन्वयः**—अथ पापैः रक्षोभिः कनकहरिणच्छद्मविधिना इदं तथा वृत्तं, यथा क्षालितमपि व्यथयति, शून्ये जनस्थाने विकलकरणैः आर्यचरितैः ग्रावा अपि रोदिति, वज्रस्य अपि हृदयं दलति ।

**व्याख्या**—अथ=तदनन्तरम्, पापैः=पापकारिभिः, रक्षोभिः=राक्षसैः कनकहरिणच्छद्मविधिना=स्वर्णमृगकपटानुष्ठानेन, इदम्=चित्रनिर्दिष्टं सीता-हरणम्, तथा=तादृग्विधम्, वृत्तम्=घटितम्, यथा=यत्, क्षालितमपि=रावणवधेन शोधितमपि, व्यथयति=सम्पीडयति, शून्ये=जनसञ्चाररहिते, जनस्थाने=दण्ड-काख्ये विपिने, विकलकरणैः=स्वव्यापारासमर्थेन्द्रियैः, आर्यचरितैः=रामस्य रोदनादिव्यापारैः, ग्रावा अपि=पाषाणोऽपि, रोदिति=अश्रूणि विमुञ्चति, का कथा प्राणिनामिति भावः, वज्रस्य अपि=कुलिशस्यापि, हृदयम्=मनः

दलति = विदीर्णं भवति। पाषाण-वज्रयोः रोदन द्रवसम्बन्धाऽभावेऽपि तथा परिकल्पनादतिशयोक्तिरलङ्कारोऽत्र, तल्लक्षणं यथा—

'सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते'। इति।

शिखरिणी नाम वृत्तम्—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'। —इति लक्षणात्।

(२९) अयं तावद्बाष्पस्त्रुटित इव मुक्तामणिसरो
विसर्पन्धाराभिर्लुठति धरणीं जर्जरकणः।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया,
परेषामुन्नेयो भवति चिरमाध्मातहृदयः॥ १।२९॥

**प्रसङ्गः**—लक्ष्मणलपनेन निखिलवृत्तान्तं निशम्य सीताऽपि सबाष्पा सखिन्न-चेता च सञ्जाता। तामवलोक्य पूर्ववृत्तान्तं च संस्मृत्य भगवान् रामोऽप्यरुदत्। रुदन्तं श्रीरामं समवलोक्य लक्ष्मणस्तं साकूतमत्र निगदति।

**अन्वयः**—तावत् धाराभिर्विसर्पन् जर्जरकणः अयं बाष्पः त्रुटितः मुक्तामणि-सर इव धरणीं लुठति, चिरमाध्मातहृदयः आवेगः निरुद्धोऽपि स्फुरदधरनासा-पुटतया परेषाम् उन्नेयो भवति।

**व्याख्या**—तावत् = तर्हि, धाराभिः = अविच्छिन्नप्रवाहैः, विसर्पन् = प्रसरन्, पतन्नित्याशयः, जर्जरकणः = चूर्णबिन्दुः सन्, अयम् = पुरतो दृश्यमानः, बाष्पः = अश्रुः, त्रुटितः = छिन्नः, मुक्तामणिसरः = मुक्ताफलरूपमणिरचितहारः, इव = यथा, धरणीम् = भूमिम्, लुठति = उपश्लिष्यति, चिरमाध्मातहृदयः = दीर्घमापू-रितचेतः, आवेगः = शोकपूरः, निरुद्धोऽपि = अन्तःसंयमितोऽपि, विलापरूपेण बहिरप्रकाशितोऽपीत्याशयः, स्फुरदधरनासापुटतया = कम्पमाननिम्नोष्ठनासिका-छिद्रतया, परेषाम् = अन्येषाम्, उन्नेयः = अनुमेयः. भवति। उपमालङ्कारोऽत्र। अनुमानालङ्कारोऽपि—

'अनुमानन्तु विच्छित्या ज्ञानं साध्यस्य साधनात्'।—इति लक्षणात्।

शिखरिणी नाम वृत्तम्। तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'। इति।

(३०) तत्कालं प्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः।
दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां तनोति॥ १।३०॥

प्रसङ्गः—स्वरोदननिमित्तं संस्पष्टीकुर्वन् भगवान् रामोऽत्र लक्ष्मणं प्रति निगदति ।

अन्वयः—प्रियजनविप्रयोगजन्मा तीव्रः अपि प्रतिकृतिवाञ्छया तत्कालं विसोढः, दुःखाग्निः पुनः मनसि विपच्यमानः ( सन् ) हृन्मर्मव्रणः इव वेदनां तनोति ।

व्याख्या—प्रियजनविप्रयोगजन्मा = सीताविरहोद्भूतः, तीव्रोऽपि = दारुणोऽपि, प्रतिकृतिवाञ्छया = वैरनिर्यातनेच्छया, तत्कालम् = तस्मिन् काले, विसोढः = कथमपि सहनार्हां दशां प्रापितवान्, दुःखाग्निः = शोकानलः, पुनः = भूयः, मनसि = चेतसि, विपच्यमानः = स्वयमेव विपाकं प्राप्यमाणः, हृन्मर्मव्रणः = हृदयगूढस्थानसञ्जातस्फोटकः; इव = यथा, वेदनाम् = व्यथाम्, तनोति = जनयति । उपमाऽलङ्कारोऽत्र । प्रहर्षिणी नाम वृत्तम्, तल्लक्षणं यथा—

'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' । इति ।

( १७ ) एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
सन्दृष्टाः कुवलयिनो मया विभागाः ॥ १।३१ ॥

प्रसङ्गः—पम्पाख्यसरोवरस्य सौन्दर्यातिशयं वर्णयितुं भगवान् रामचन्द्रोऽत्र सीतां प्रति व्याहरति ।

अन्वयः—एतस्मिन् मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीकाः कुवलयिनः विभागाः मया बाष्पाम्भःपरिपतनोद्गमान्तराले सन्दृष्टाः ।

व्याख्या—एतस्मिन् = परमरमणीये पम्पासरसि, मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीकाः = प्रमोदाव्यक्तमधुरध्वनिश्वेतहंसपत्रकम्पितमनोहरबृहन्नालश्वेतकमलाः, कुवलयिनः = नीलोत्पलसमन्विताः, विभागाः = प्रदेशाः, मया = रामचन्द्रेण, बाष्पाम्भःपरिपतनोद्गमान्तराले = अश्रुबिन्दुनिर्गममध्ये, सन्दृष्टाः = समवलोकिताः । उत्प्रेक्षाऽलङ्कारोऽत्र । प्रहर्षिणी नाम वृत्तम्, तल्लक्षणं यथा—

'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्' । इति ।

( २८ ) जीवयन्निव ससाध्वसश्रमस्वेदबिन्दुरधिकण्ठमर्प्यताम् ।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥ १।३४ ॥

प्रसङ्गः—भगवान् श्रीरामः विदेहनन्दिनीं जानकीं वातायनान्तिके स्वबाहुसमाश्रयेण यथासुखं शयनं विधातुं सम्प्रेरयत्यत्र ।

अन्वयः—ससाध्वसश्रमस्वेदबिन्दुः, ऐन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः बाहुः जीवयन् इव अधिकण्ठम् अर्प्यताम् ।

व्याख्या—ससाध्वसश्रमस्वेदबिन्दुः = चित्रदर्शनजनितखेदसमुत्पन्नघर्मबिन्दुसमन्वितः, ऐन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः = चन्द्रसम्बन्धिकिरणसंस्पृष्टजलस्रवयुक्तचन्द्रकान्तमणिनिर्मितहारविलासयुक्तः, बाहुः = स्वभुजः, जीवयन् = समाश्वासयन्, इव = यथा, अधिकण्ठम् = मदीये कण्ठे, अर्प्यताम् = निधीयताम्, त्वमिति शेषः । जीवयन्निवेत्यत्रोत्प्रेक्षालङ्कारः । रथोद्धता नाम वृत्तम्, तल्लक्षणं यथा—

'रान्नराविह रथोद्धता लगौ' । इति ।

( २९ ) विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च ॥ १।३५ ॥

प्रसङ्गः—श्रीरामचन्द्रोऽत्र स्वदयितायाः जानक्याः पाणिं स्वकण्ठे धारयित्वा प्रभूतं सुखमनुभवन् व्याहरति ।

अन्वयः—( प्रिये ! ) तव स्पर्शे-स्पर्शे परिमूढेन्द्रियगणः विकारः हि मम चैतन्यं भ्रमयति च सम्मीलयति च, ( अतोऽयं विकारः ) सुखम् इति वा दुःखम् इति वा, प्रमोहः निद्रा वा, विषविसर्पः किमु, मदः किमु, ( इति ) विनिश्चेतुं न शक्यः ।

व्याख्या—तव = भवत्याः, सीताया इत्याशयः, स्पर्शे स्पर्शे = प्रतिस्पर्शम्, परिमूढेन्द्रियगणः = निश्चेष्टतामधिगतेन्द्रियव्रातः, विकारः = चेतसोऽन्यथाभावः, हि = निश्चयेन, मम = रामचन्द्रस्य, चैतन्यम् = चेतनाम्, भ्रमयति च = भ्रान्तं विदधाति च, सम्मीलयति च = सङ्कोचयति च, ( अतोऽयं विकारः ) सुखमिति वा = सुखरूपेण वा, दुःखमिति वा = दुःखरूपेण वा, प्रमोहः = प्रकृष्टा मूर्च्छा, निद्रा = स्वापः; वा = अथवा, विषविसर्पः किमु = शरीरे विषप्रसरणं किमु, मदः किमु = आसवादिसेवनजनितो विकारः किमु, ( इति = एवम्प्रकारेण ) विनिश्चेतुम् = निर्णेतुम्, न = नहि, शक्यः = शक्यते, मयेति शेषः । सन्देह काव्यलिङ्गालङ्कारौ चात्र । शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना: यमनसभलागः शिखरिणी' । इति ।

( ३० ) म्लानस्य जीवकुसुमस्य विकासनानि
सन्तर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते सुवचनानि सरोरुहाक्षि
कर्णामृतानि मनसश्च रसायनानि ॥ १।३६ ॥

प्रसङ्गः—परमपूतायाः देव्याः जानक्याः पुनरपि प्रीतिरसस्निग्धानि वचनानि समाकर्ण्य भगवान् रामोऽत्र स्वकीयं विचारमुद्गिरति ।

अन्वयः—हे सरोरुहाक्षि ! एतानि ते सुवचनानि म्लानस्य जीवकुसुमस्य विकासनानि, सन्तर्पणानि, सकलेन्द्रियमोहनानि, कर्णामृतानि, मनसः रसायनानि च ( सन्ति ) ।

व्याख्या—हे सरोरुहाक्षि ! = भो पङ्कजलोचने ! एतानि = अनन्तरनिगदितानि, ते = तव सीतायाः, सुवचनानि = शोभनानि प्रीतिरसयुक्तानि वचनानि, म्लानस्य = प्रतिकूलसंसारिभावपवनैः विशोषितस्य, जीवकुसुमस्य = जीवनप्रसूनस्य, विकासनानि = प्रस्फोटनानि, आह्लादकानीति भावः, सन्तर्पणानि = तृप्तिप्रदानि, सकलेन्द्रियमोहनानि = अशेषेन्द्रियमोहकानि, कर्णामृतानि = श्रोत्रसुखोत्पादकानि, मनसः = अन्तःकरणस्य, रसायनानि = पुष्टिकराणि भेषजानि, सन्तीति शेषः । सरोरुहाक्षीत्यत्रोपमाऽलङ्कारः । वसन्ततिलकं नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' । इति ।

( ३१ ) इयं गेहे लक्ष्मीरियममृतवर्तिनयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो ? यदि परमसह्यस्तु विरहः ॥ १।३८ ॥

प्रसङ्गः—स्ववक्षसि प्रसुप्तां मैथिलीं निर्वर्ण्य भगवान् रामचन्द्रोऽत्र तामुद्दिश्य स्वहृद्गतं भावमभिव्यनक्ति ।

अन्वयः—इयं गेहे लक्ष्मीः, इयं नयनयोः अमृतवर्तिः, अस्याः असौ स्पर्शः वपुषि बहुलः चन्दनरसः, अयं बाहुः कण्ठे शिशिरमसृणः मौक्तिकसरः, अस्याः किं न प्रेयः ? तु विरहः यदि ( भवेत् तदा सः ) परम् असह्यः ( स्यात् ) ।

व्याख्या—इयम् = पुरोवर्तिनी सीता, गेहे = भवने, लक्ष्मीः = श्रीः, इयम् = जानकी, नयनयोः = लोचनयोः, अमृतवर्तिः = सुधामयी अञ्जनशलाका, अस्याः = सीतायाः, असौ = अनुभूयमानः, स्पर्शः = कायसंसर्गः, वपुषि = शरीरे, बहुलः =

प्रभूतः, चन्दनरसः = श्रीखण्डद्रवसदृशः, अयम् = कण्ठे अर्पितः, बाहुः = भुजः, कण्ठे = गले, शिशिरमसृणः = शीतलमृदुः, मौक्तिकसरः = मुक्ताहारः, अस्याः = जानक्याः, किं न प्रेयः ? = सर्वमतिशयेन प्रिय इति भावः, तु = किन्तु, विरहः = वियोगः, यदि = चेत्, ( भवेत् तदा सः ) परम् = सातिशयम्, असह्यः = सोढुमशक्य एव। एकस्याः सीतायाः अनेकधा समुल्लेखाद् उल्लेखालङ्कारोऽत्र, अतिशयोक्तिरलङ्कारोऽपि । शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' । इति ।

( ३२ ) अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥ १।३९ ॥

**प्रसङ्गः**—सप्रणयं सीतायाः अङ्गं संस्पृशन् भगवान् श्रीरामचन्द्रोऽत्र निजमानसगतं भावमभिव्यनक्ति ।

**अन्वयः**—यत् सुखदुःखयोः अद्वैतं, सर्वासु अवस्थासु अनुगतं, यत्र हृदयस्य विश्रामः, यस्मिन् जरसा रसः अहार्यः, यत् कालेन आवरणात्ययात् परिणते प्रेमसारे स्थितं, तस्य सुमानुषस्य तत् एकं भद्रं कथमपि हि प्रार्थ्यते ।

**व्याख्या**—यत् = दाम्पत्यम्, सुखदुःखयोः = सुखे दुःखे च, अद्वैतम् = द्वैविध्यरहितम्, एकरूपमित्याशयः, सर्वासु अवस्थासु = सम्पद्विपद्रूपासु, बाल्यकौमारयौवनजरासु वा, अनुगतम् = अनुसारि, यत्र = यस्मिन् दाम्पत्ये, हृदयस्य = संसारयातनाक्लिष्टस्य मनसः, विश्रामः = क्लेशापगमः, यस्मिन् = दाम्पत्ये, जरसा = वार्धक्येन, रसः = प्रीतिः, अहार्यः = हर्तुमशक्यः, यत् = दाम्पत्यम्, कालेन = कालक्रमेण, आवरणात्ययात् = सङ्कोचादिरूपप्रतिबन्धकापगमात्, परिणते = परिपाकमुपेयुषि, प्रेमसारे = स्नेहोत्कृष्टांशे, प्रगाढे अनुरागे—इत्याशयः, स्थितम् = परिनिष्ठितम्, तस्य = पूर्वनिगदितस्य, सुमानुषस्य = सत्पुरुषस्य, तत् = तादृशं दम्पत्योः प्रेम, एकम् = इतरविलक्षणम्, भद्रम् = कल्याणम्, कथमपि = केनापि प्रकारेण, हि = निश्चयेन, प्रार्थ्यते = अर्थ्यते । अप्रस्तुतप्रशंसा-काव्यलिङ्गालङ्कारौ चात्र । शार्दूलविक्रीडितं नाम वृत्तम् । तल्लक्षणं यथा—

'सूर्याश्वैर्मसजास्ततः सगुरवः शार्दूलविक्रीडितम्' । इति ।

(३३) हा हा धिक् ! परगृहवासदूषणं यद्
वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत्तत्पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसक्तम् ॥ १४० ॥

प्रसङ्गः—दुर्मुखवचनात् मूर्च्छामधिगत्य भगवान् रामचन्द्रोऽत्र केनापि प्रकारेण धैर्यमाश्रित्य निगदति ।

अन्वयः—हा हा धिक् ! वैदेह्याः यत् परगृहवासदूषणम् अद्भुतैः उपायैः प्रशमितं, तद् एतत् पुनरपि दैवदुर्विपाकात् आलर्कं विषमिव सर्वतः प्रसक्तम् ।

व्याख्या—हा हा ! = इति खेदे, धिक् ! = कष्टम्, वैदेह्याः = जानक्याः, यत् = पूर्वानुभूतम्, परगृहवासदूषणम् = शत्रुभवननिवासजनितदोषम्, अद्भुतैः = विचित्रैः, वह्निशुद्धिरूपैरित्याशयः, उपायैः = साधनैः, प्रशमितम् = परिहृतम्, तद् = पूर्वानुभूतम्, एतद् = अरिभवनवासदूषणम्, पुनरपि = भूयोऽपि, दैवदुर्विपाकात् = भाग्यदुष्परिणामात्, आलर्कम् = उन्मत्तकुक्कुरसम्बन्धि, विषम् = गरलम्, इव = यथा, सर्वतः = समन्तात्, प्रसक्तम् = व्याप्तम् । उपमालङ्कारोऽत्र । प्रहर्षिणी नाम वृत्तम् ।

(३४) यत्साबित्रैर्दीपितं भूमिपालै-
र्लोकश्रेष्ठैः साधु शुद्धं चरित्रम् ।
मत्सम्बन्धात्कश्मला किंवदन्ती
स्याच्चेदस्मिन्हन्त ! धिङ्मामधन्यम् ॥ १४२ ॥

प्रसङ्गः—कर्तव्याकर्तव्यविवेकशून्यो भगवान् रामः स्वचेतसि सन्तापमनुभवन् निजकर्तव्यनिर्धारणाय विचारान्तरं विदधात्यत्र ।

अन्वयः—यत् साधु शुद्धं चरित्रं लोकश्रेष्ठैः सावित्रैः भूमिपालैः दीपितम्, अस्मिन् मत्सम्बन्धात् कश्मला किंवदन्ती स्यात्, चेत्, हन्त माम् अधन्यं धिक् ।

व्याख्या—यत्, साधु = प्रशस्तम्, शुद्धम् = पवित्रम्, चरित्रम् = वृत्तम्, लोकश्रेष्ठैः = भुवनोत्कृष्टैः, सावित्रैः = सवितृवंशसम्भूतैः, भूमिपालैः = भूपतिभिः, दीपितम् = उज्ज्वलीकृतम्, अस्मिन् = एतस्मिन्, मत्सम्बन्धात् = मत्सम्पर्काद्धेतोः, कश्मला = कुत्सिता, किंवदन्ती = जनश्रुतिः, स्यात् = भवेत्, चेत् = यदि, हन्त ! = इति खेदे, माम् = रामचन्द्रम्, अधन्यम् = पुण्यरहितम्, धिक् ! = धिक्कारः, विद्यत इति शेषः । विषमालङ्कारोऽत्र । शालिनी नाम वृत्तम्, तल्लक्षणं यथा—

'शालिन्युक्ताम्तौ तगौ गोऽब्धिलोकैः' । इति ।

( ३५ ) इक्ष्वाकुवंशोऽभिमतः प्रजानां जातं च दैवाद्वचनीयबीजम् ।
यच्चाद्भुतं कर्म विशुद्धिकाले प्रत्येतु कस्तद्व्यतिदूरवृत्तम् ॥१।४४॥

**प्रसङ्गः**—दुर्मुखवदनात् 'दुर्जनवचनात्'—इत्यादिकं वाचं समाकर्ण्य भगवान् रामचन्द्रोऽत्र 'पौरजानपदाः दुर्जनाः भवितुं नार्हन्ती'ति प्रतिपादनाय तं प्रति व्याहरति ।

**अन्वयः**—इक्ष्वाकुवंशः प्रजानाम् अभिमतः दैवात् च वचनीयबीजं जातम्, विशुद्धिकाले च यद् अद्भुतं कर्म तत् कः प्रत्येतु, हि अतिदूरवृत्तम् :

**व्याख्या**—इक्ष्वाकुवंशः = इक्ष्वाकुनामनृपतेः कुलम्, प्रजानाम् = जनानाम्, अभिमतः = अभीष्टः, सर्वाः प्रजाः तस्मिन् वंशे अनुरक्ताः सन्तीत्याशयः, दैवात् च = दैवयोगाच्च, वचनीयबीजम् = लोकापवादकारणम्, जातम् = समुत्पन्नम्, विशुद्धिकाले = जानक्याः वह्निशुद्धिसमये, यत् च अद्भुतम् = विचित्रम्, कर्म = अग्निप्रवेशरूपकार्यम्, तत्, कः = को नाम जनः, प्रत्येतु = विश्वसितु, न कोऽपीत्याशयः, हि = यतः, अतिदूरवृत्तम् = लङ्काद्वीपे निष्पन्नम् । काव्यलिङ्गालङ्कारोऽत्र । इन्द्रवज्रा नाम वृत्तम्, तल्लक्षणं यथा—

'स्यादिन्द्रवज्रा यदि तौ जगौ गः' । इति ।

( ३६ ) शैशवात्प्रभृतिपोषितां प्रियां सौहृदादपृथगाश्रयामिमाम् ।
छद्मना परिददामि मृत्यवे सौनिको गृहशकुन्तिकामिव ॥ १।४५ ॥

**प्रसङ्गः**—आत्मनो नृशंसकर्मकारित्वमेव प्रतिपादयितुं भगवान् श्रीरामचन्द्रोऽत्र व्याहरति ।

**अन्वयः**—शैशवात् प्रभृतिपोषितां प्रियां सौहृदात् अपृथगाश्रयाम् इमां सौनिकः गृहशकुन्तिकाम् इव छद्मना मृत्यवे परिददामि :

**व्याख्या**—शैशवात्प्रभृति = बाल्यकालादारभ्य, पोषिताम् = पालिताम्, प्रियाम् = वल्लभाम्, सौहृदात् = प्रेमवशात्, अपृथक् = अभिन्नः, आश्रयः = अवलम्बनम्, यस्यास्ताम् अपृथगाश्रमाम् = मदेकशरणाम्, इमाम् = मद्बाहुमुपधानीकृत्य शयानां सीताम्, सौनिकः = मांसविक्रयी, गृहशकुन्तिकाम् = भवनपालितां पक्षिणीम्, इव = यथा, छद्मना = कपटेन, मृत्यवे = कालाय, परिददामि = समर्पयामि । उपमाऽलङ्कारोऽत्र, रथोद्धतावृत्तम् ।

( ३७ ) अपूर्वकर्मचण्डालमयि मुग्धे विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ १।४६ ॥

**प्रसङ्गः**—स्वीयं बाहुं सीतादेव्याः शिरसः समाकृष्य भगवान् रामचन्द्रोऽ तां प्रति निगदति ।

**अन्वयः**—अयि मुग्धे ! अपूर्वकर्मचण्डालं मां विमुञ्च, ( त्वं ) चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमं श्रिता असि ।

**व्याख्या**—अयि मुग्धे ! = अयि सरलहृदये ! अपूर्वकर्मचण्डालम् = अश्रुतपूर्व सतीत्यागरूपकर्मणा चण्डालसदृशम्, माम् = रामम्, मम गात्रस्पर्शं वा, विमुञ्च = परिहर, ( त्वं ) चन्दनभ्रान्त्या = चन्दनद्रुमभ्रमेण, दुर्विपाकम् = अनुचितपरिणामम्, विषद्रुमम् = विषवृक्षमेव, श्रिता = आश्रितवती असि = विद्यसे । निदर्शनालङ्कारोऽत्र । अनुष्टुब्वृत्तम्, तल्लक्षणं यथा—

'श्लोके षष्ठ गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ।। इति ।

( ३८ ) दुःखसंवेदनायैव रामे चैतन्यमाहितम् ।
मर्मोपघातिभिः प्राणैर्वज्रकीलायितं हृदि ।। १।४७ ।।

**प्रसङ्गः**—सीताविरहितस्य मे जीवनं निष्फलमित्यनुभवन् 'मदर्थं कुत्रापि स्थानं नास्ति, न च किमपि कर्तव्यम्' इति प्रतिपादयन् रामचन्द्रोऽत्र स्वीयं विचारमभिव्यनक्ति ।

**अन्वयः**—दुःखसंवेदनाय एव रामे चैतन्यम् आहितम्, मर्मोपघातिभिः प्राणैः हृदि वज्रकीलायितम् ।

**व्याख्या**—दुःखसंवेदनाय = दुःखमनुभवितुम्, एव = निश्चयेन, रामे = हतभाग्ये मयि, चैतन्यम् = चेतना, संज्ञा वा, आहितम् = प्रतिष्ठापितम्, विधात्रा इति शेषः, मर्मोपघातिभिः = अरुन्तुदैः, प्राणैः = असुभिः, हृदि = हृदये, वज्रकीलायितम् = वज्रकीलवदाचरितम् । तथा च मरणमपि दुर्लभमित्याशयः । उपमालङ्कारोऽत्र । अनुष्टुब्वृत्तम्, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्वितुर्यपादयोर्ह्रस्व सप्तम दीर्घमन्ययोः' ।। इति ।

( ३९ ) विस्रम्भादुरसि निपत्य लब्धनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वीं
क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि ।। १।४९ ।।

प्रसङ्गः—भगवान् रामचन्द्रो मैथिल्याः परित्यागे स्वकीयं पापकारित्वमत्रानुभवति ।

अन्वयः—( योऽहम् ) निर्घृणः विस्रम्भात् उरसि निपत्य लब्धनिद्रां गृहस्य शोभां आतङ्कस्फुरितकठोरगर्भगुर्वीं प्रियगृहिणीं उन्मुच्य क्रव्याद्भ्यः बलिमिव क्षिपामि ।

व्याख्या—( योऽहम् ) निर्घृणः = निर्दयः, विस्रम्भात् = विश्वासाद्, निःशङ्कं, उरसि = मम वक्षसि, निपत्य = सविश्य, लब्धनिद्राम् = प्राप्तस्वापाम्, गृहस्य = भवनस्य, शोभाम् = शोभाविधात्रीम्, आतङ्कस्फुरितकठोरगर्भगुर्वीम् = चित्रदर्शनजनितत्रासस्पन्दितपूर्णगर्भभारवतीम्, प्रियगृहिणीम् = प्रियां पत्नीम्, उन्मुच्य = वक्षसः उत्तोल्य, क्रव्याद्भ्यः = आममांसभक्षिभ्यः, बलिमिव = भक्षणार्थमामिषपिण्डमिव, क्षिपामि = दूरादेव न्यस्य ददामि । उपमाऽलङ्कारोऽत्र, प्रहर्षिणी नाम वृत्तम् ।

( ४० ) जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
यां देवयजने पुण्ये पुण्यशीलामजीजनः ॥ १।५१ ॥

प्रसङ्गः—श्रीरामचन्द्रोऽत्र स्वप्रियां जानकीमभिरक्षितुं भगवतीं धरित्रीं प्रार्थयते ।

अन्वयः—यत् जनकानां रघूणां च कृत्स्नं गोत्रमङ्गलं, पुण्यशीलां यां पुण्ये देवयजने ( त्वम् ) अजीजनः ।

व्याख्या—यत्, जनकानाम् = जनकवंश्यानाम्, रघूणां च = रघुवंश्यानां च, कृत्स्नम् = समग्रम्, गोत्रमङ्गलम् = वंशकल्याणम्, पुण्यशीलाम् = पवित्रचरिताम्, याम् = जानकीम्, स्वदुहितर वा, पुण्ये = पावने, देवयजने = यज्ञभूमौ, ( त्वम् = धरित्री ) अजीजनः = जनयामास । रूपकालङ्कारोऽत्र । अनुष्टुब्वृत्तम्, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥ इति ।

---

## द्वितीयोऽङ्कः

( ४१ ) यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ २।१ ॥

प्रसङ्गः—पूजापात्रादर्घ्यं दूरादेव धरण्यां विकीर्य वनदेवता तपस्विन्याः स्वागतं विधातुमुपक्रमतेऽत्र ।

अन्वयः—इदं वनं वो यथेच्छं भोग्यम्, अयं मे सुदिवसः, हि सतां सद्भिः सङ्गः कथमपि पुण्येन भवति, तरुच्छाया तोयं यदपि तपसो योग्यम् अशनं, फलं वा मूलं वा, तदपि इह वः न पराधीनम् ।

व्याख्या—इदम् = पुरो दृश्यमानम्, वनम् = विपिनम्, वः = युष्माकम्, यथेच्छम् = स्वेच्छया, भोग्यम् = उपभोगयोग्यम्, अयम् = उपस्थितः, मे = मम, सुदिवसः = शुभादिनम्, हि = यतः, सताम् = साधूनाम्, सद्भिः = सत्पुरुषैः, सङ्गः = सङ्गतिः, कथमपि पुण्येन = केनापि सुकृतेनैव, भवति = जायते, तरुच्छाया = अनातपः, तोयम् = जलम्, यदपि = यत्किञ्चित्, तपसः = इन्द्रियसंयमादिरूपस्य तपश्चरणस्य, योग्यम् = समुचितम्, अशनम् = भोजनम्, फलं वा = महीरुहप्रसवो वा, मूलं वा = कन्दादिकं वा, तदपि = तत्सर्वमपि, इह = अत्र कानने, वः = युष्माकम्, न पराधीनम् = न परतन्त्रम्, स्वाधीनमस्तीति भावः । अर्थान्तरन्यासालङ्कारोऽत्र । शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' । इति ।

( ४२ ) प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २।२ ॥

प्रसङ्गः—वनदेवतायाः रसान्वितां तथ्यगर्भां पथ्याञ्च वाचं निशम्य तापसी तां प्रति सहर्षं स्वहृद्गतं भावमत्र व्याहरति ।

अन्वयः—प्रियप्राया वृत्तिः, विनयमधुरः वाचि नियमः, प्रकृत्या कल्याणी मतिः, अनवगीतः परिचयः, इदं तत पुरो वा पश्चाद्वा अविपर्यासितरसम् अनुपधि विशुद्धं साधूनां रहस्यं विजयते ।

**व्याख्या**—प्रियप्राया = प्रायेण प्रीतिस्निग्धा, वृत्तिः = व्यवहृतिः, विनयमधुरः = अनौद्धत्यहृद्यः, वाचि = वाण्याम्, नियमः = संयमः, मितभाषित्वमित्याशयः, प्रकृत्या = स्वभावेन, कल्याणी = प्राणिनां मङ्गलविधायिनी, मतिः = बुद्धिः, अनवगीतः = अनिन्दितः, परिचयः = संस्तवः, इदम् = उक्तप्रकारकम्, तत् = प्रसिद्धम्, पुरो वा पश्चाद्वा = सङ्गमात्पूर्वं सङ्गमादनन्तरं वा; अविपर्यासितरसम् = अपरिवर्तितस्वरूपम्, अनुपधि = कपटरहितम्, विशुद्धम् = सर्वथा निर्दोषम्, साधूनाम् = सज्जनानाम्, रहस्यम् = गूढचरितम्, विजयते = सर्वोत्कर्षेण वर्तते। अप्रस्तुतप्रशंसाव्यतिरेकालङ्कारावत्र। शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'। इति।

(४३) **वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे**
**न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।**
**भवति च तयोर्भूयान् भेदः फलं प्रति तद्यथा**
**प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदां चयः॥ २१४॥**

**प्रसङ्गः**—परस्परसंलापप्रसङ्गे आत्रेयी वनदेवतां प्रति महर्षेः वाल्मीकेराश्रमे कुश-लवाभ्यां साकमध्ययनयोगो भवितुं नार्हतीत्यस्य कारणमत्र समुपवर्णयति।

**अन्वयः**—गुरुः यथैव प्राज्ञे विद्यां वितरति तथा जडे, न च खलु तयोः ज्ञाने शक्तिं करोति अपहन्ति वा, तयोः फलं प्रति भूयान् भेदः भवति च, तद् यथा शुचिः मणिः बिम्बग्राहे प्रभवति, मृदां चयः न।

**व्याख्या**—गुरुः = अध्यापकः, यथैव = येन प्रकारेण, प्राज्ञे = प्रज्ञावति शिष्ये, विद्याम् = ज्ञानम्, वितरति = उपदिशति, तथा = तेन प्रकारेण, जडे = अल्पमतिसमन्विते शिष्येऽपि, न च, खलु = निश्चयेन, तयोः = प्राज्ञ-जडयोः, ज्ञाने = शास्त्रार्थबोधे, शक्तिम् = सामर्थ्यम्, करोति = जनयति, वा = अथवा, अपहन्ति = विनाशयति; तयोः = प्राज्ञजडयोः, फलं प्रति = फले, शास्त्रार्थज्ञानविषये = इत्याशयः, भूयान् = महान्, भेदः = वैषम्यम्, भवति च = सन्दृश्यते च, तद् = भेदभवनम्, यथा = येन प्रकारेण, शुचिः = निर्मलः, मणिः = रत्नम्, बिम्बग्राहे = प्रतिबिम्बग्रहणे, प्रभवति = समर्थो भवति, मृदाम् = मृत्तिकानाम्, चयः = समूहः, न = नहि, प्रभवतीति शेषः। उपमा-दृष्टान्तश्चालङ्कारावत्र। हरिणी वृत्तम्, तल्लक्षणं यथा—

'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा'। इति।

(४४) मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ २।५ ॥

प्रसङ्गः—आत्रेयी वनदेवतां प्रति स्वाध्ययनप्रत्यूहं प्रदर्शयन् पुंसक्रौञ्चवध-कथामत्र चारुतया समुपवर्णयति ।

अन्वयः—हे निषाद ! त्वं शाश्वतीः समाः प्रतिष्ठां मा अगमः, यत् क्रौञ्च-मिथुनात् काममोहितम् एकम् अवधीः ।

व्याख्या—हे निषाद ! = भो व्याध ! त्वम् = निषादः, शाश्वतीः = अनन्ताः, समाः = वर्षाणि व्याप्य, प्रतिष्ठाम् = आस्पदम्, एकत्र वासस्थानमित्याशयः, मा अगमः = न प्राप्नुहि, यत् = यतः, क्रौञ्चमिथुनात् = जलचरपक्षिविशेषयो-र्द्वन्द्वात्, काममोहितम् = कामासक्तचेतसम्, एकम् = पुमांसं क्रौञ्चम्, अवधीः = निहतवान् असि । काव्यलिङ्गमलङ्कारोऽत्र । अनुष्टुब्वृत्तम्, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्विचतुर्थपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥ इति ।

(४५) स एष ते वल्लभबन्धुवर्गः प्रासङ्गिकीनां विषयः कथानाम् ।
त्वां नामशेषामपि दृश्यमानः प्रत्यक्षदृष्टामिव नः करोति ॥ २।६ ॥

प्रसङ्गः—वनदेवतायाः मुखात् 'पञ्चवटीयमि'ति ज्ञात्वा सास्रं सकरुणं जानकीं संस्मृत्यात्र आत्रेयी व्याहरति ।

अन्वयः—प्रासङ्गिकीनां कथानां विषयः स एष ते वल्लभबन्धुवर्गः दृश्य-मानः नामशेषामपि त्वां नः प्रत्यक्षदृष्टामिव करोति ।

व्याख्या—प्रासङ्गिकीनाम् = प्रसङ्गप्राप्तानाम्, कथानाम् = संलापानाम्, विषयः = प्रतिपाद्यः, सः = पूर्वानुभूतः, एषः = अयम्, ते = तव, वल्लभबन्धुवर्गः = प्रियबन्धुव्रातः, दृश्यमानः = विलोक्यमानः, नामशेषामपि = पञ्चत्वमधि-गतामपि, त्वाम् = जानकीम्, नः = अस्माकम्, प्रत्यक्षदृष्टामिव = प्रत्यक्षीभूता-मिव, करोति = विदधाति । भाविकालङ्कारोऽत्र, 'इव' इति पदोपादानेनोत्प्रेक्षा च । इन्द्रवज्रोपेन्द्रवज्रयोर्मिश्रणादुपजाति नाम वृत्तम्, तल्लक्षणं यथा—

'स्यादिन्द्रवज्रा यदि तौ जगौ गः' ।
'उपेन्द्रवज्रा प्रथमे लघौ सा' ।
अनन्तरोदीरितलक्ष्मभाजौ,
पादौ यदीयावुपजातयस्ताः ॥ इति ।

( ४६ ) वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ॥ २१७ ॥

प्रसङ्गः—हाटकमयीं जानकीं धर्मपत्नीरूपेणाङ्गीकृत्य रामचन्द्रोऽश्वमेधयागं प्रारभते—इति समाकर्ण्य वासन्ती स्वकीयं विचारमत्रोद्गिरति ।

अन्वयः—वज्रादपि कठोराणि तथा कुसुमादपि मृदूनि लोकोत्तराणां चेतांसि को नु विज्ञातुम् अर्हति ।

व्याख्या—वज्रादपि = कुलिशादपि, कठोराणि = कर्तव्यानुरोधात् कठिनतराणि, ( तथा ) कुसुमादपि = प्रसूनादपि, मृदूनि = स्नेहमयत्वात् कोमलतराणि, लोकोत्तराणाम् = अलौकिकमहापुरुषाणाम्, चेतांसि = मनांसि, हृदयानि वा, को नु = कः जनः, विज्ञातुम् = विशेषेणावगन्तुम्, अर्हति = शक्नोति, न कोऽपीत्याशयः । मृदु-कठोरयोरेकत्र वर्णनादत्र विषमालङ्कारः, अप्रस्तुतप्रशंसा च । अनुष्टुब्वृत्तमत्र, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥ इति ।

( ४७ ) कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभि-
र्घर्मस्रंसितबन्धनैः स्वकुसुमैरर्चन्ति गोदावरीम् ।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ २१९ ॥

प्रसङ्गः—विहितविश्रामां जिगमिषन्तीमात्रेयीं प्रति दिनस्यातिदुःसहत्वं सूर्यस्य प्रखरकिरणसन्तप्तत्वं च वर्णयन्ती वासन्ती अत्र व्याहरति ।

अन्वयः—छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन सम्पातिभिः घर्मस्रंसितबन्धनैः स्वकुसुमैः गोदावरीम् अर्चन्ति ।

व्याख्या—छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः—छायासु = अनातपे, अपस्किरमाणाः = भक्ष्यसंग्रहार्थं नखैरितस्ततोऽवलिखन्तः, ये विष्किराः = पक्षिणः, तेषां मुखैः = चञ्चुभिः, व्याकृष्टाः = बहिर्निष्काशिताः, कीटाः = कृमयः, याभ्यस्तादृशः त्वचः = वल्कलानि येषां तथाविधाः, कूजत्क्लान्तकपोतकुक्कुटकुलाः—कूजन्तः = रुवन्तः, क्लान्ताः = आतपखिन्नाः, ये कपोताः = पारावताः, कुक्कुटाश्च तेषां कुलानि = समूहाः, येषु ते तथोक्ताः, कूले = तटे, कुलायद्रुमाः = नीडसमन्वितास्तरवः, कण्डूलद्विपगण्डपिण्डकषणोत्कम्पेन—कण्डूलाः =

कण्डू: विद्यते येषां ते, द्विपाः = हस्तिनः, तेषां गण्डपिण्डानाम् = पिण्डाकारक कपोलानाम्, कषणेन = कण्डूनिरासाय घर्षणेन, यः उत्कम्पः = परिचालनम्, तेन सम्पातिभिः = समूहेन पतद्भिः, घर्मस्रंसितबन्धनैः—घर्मेण = आतपेन, स्रंसितानि = शिथिलतानि, बन्धनानि = वृन्तानि, येषां तैस्तथोक्तैः, स्वकुसुमैः = निजप्रसूनैः, गोदावरीम् = एतन्नाम्नीं नदीम्, अर्चन्ति = पूजयन्ति । तीरतरूणां पुष्पाणि गोदावर्यां पतन्ति, तथाविधकुसुमपातश्चार्चनत्वेनोत्प्रेक्ष्यते, एतावता उत्प्रेक्षालङ्कारोऽत्र, स्वभावोक्तिरलङ्कारोऽपि । शार्दूलविक्रीडितं नाम वृत्तम्, तल्लक्षणं यथा—

'सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्' । इति ।

**( ४८ ) रे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य**
**जीवातवे विसृज शूद्रमुनौ कृपाणम् ।**
**रामस्य गात्रमसि निर्भरगर्भखिन्न-**
**सीताविवासनपटोः करुणा कुतस्ते ? ॥ २।१० ॥**

**प्रसङ्गः**—भगवान् रामचन्द्रोऽत्र शूद्रमुनौ प्रहरणाय स्वदक्षिणभुजं सम्प्रेरयन् व्याहरति ।

**अन्वयः**—रे दक्षिणहस्त ! द्विजस्य मृतस्य शिशोः जीवातवे शूद्रमुनौ कृपाणं विसृज, निर्भरगर्भखिन्नसीताविवासनपटोः रामस्य गात्रम् असि, ते करुणा कुतः ?

**व्याख्या**—रे दक्षिणहस्त ! = भो अपसव्यभुज ! द्विजस्य = विप्रस्य, मृतस्य = यमसदनमधिगतस्य, शिशोः = बालकस्य, जीवातवे = प्रत्युज्जीवनाय, शूद्रमुनौ = शूद्रतापसे, कृपाणम् = खड्गम्, विसृज = विमुञ्च, निर्भरगर्भखिन्नसीताविवासनपटोः = पूर्णगर्भक्लिष्टजानकीकाननपरित्यागनिपुणस्य, रामस्य = नृशंसस्य रामचन्द्रस्य, गात्रम् = अङ्गम्, असि = विद्यसे, ते = तव रामभुजस्य, करुणा = दया, कुतः = कस्माद्धेतोः भविष्यति । काव्यलिङ्गालङ्कारोऽत्र । वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' । इति ।

**( ४९ ) दत्ताभये त्वयि यमादपि दण्डधारे**
**सञ्जीवितः शिशुरसौ मम चेयमृद्धिः ।**
**शम्बूक एष शिरसा चरणौ नतस्ते**
**सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ २।११ ॥**

**प्रसङ्गः**—भगवता रामेण व्यापादितः शूद्रमुनिः शम्बूकः दिव्यरूपं सन्धार्य रामभद्रस्यान्तिकमुपेत्य प्रणमन् स्वकीयं हृद्गतं भावमत्रोद्गिरति ।

**अन्वयः**—यमाद् अपि दत्ताभये त्वयि दण्डधारे सति असौ शिशुः सञ्जीवितः, मम च इयम् ऋद्धिः, एष शम्बूकः ते चरणौ शिरसा नतः, सत्सङ्गजानि निधनानि अपि तारयन्ति ।

**व्याख्या**—यमाद् अपि = कृतान्ताद् अपि, दत्तम् अभयं येन, तस्मिन् दत्ताभये = अभयप्रदे, त्वयि = रामचन्द्रे, दण्डधारे = दण्डधारके सति, असौ = विप्रकृष्टस्थः, शिशुः = विप्रबालकः, सञ्जीवितः = प्रत्यागतप्राणः, मम च = शूद्रमुनेः शम्बूकस्य च, इयम् = एषा, ऋद्धिः = समुन्नतिः, एषः = अयम्, शम्बूकः = एतन्नामकः शूद्रमुनिः, ते = तव रामस्य, चरणौ = पादौ, नतः = नमस्यति, सत्सङ्गजानि = साधुसंसर्गात् जातानि, निधनानि अपि = विनाशा अपि, तारयन्ति = तरणं कारयन्ति, संसारसागरादुद्धारकानि भवन्तीत्याशयः । विषमालङ्कारोऽत्र, विशेषार्थस्य सामान्यतया समर्थनादर्थान्तरन्यासश्चापि । वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' इति ।

**( ५० ) यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च सम्पदः ।**
**वैराजा नाम ते लोकास्तैजसा सन्तु ते शिवाः ॥ २।१२ ॥**

**प्रसङ्गः**—शुभसमाचारश्रवणेन प्रसन्नो भगवान् रामः 'उग्रस्य तपसः फलमनुभव' इति प्रोच्य शम्बूकं प्रति स्वविचारमभिव्यनक्ति ।

**अन्वयः**—यत्र आनन्दाश्च ( यत्र ) मोदाश्च यत्र पुण्याः सम्पदश्च, ते तैजसाः शिवाः वैराजाः नाम लोकाः ते सन्तु ।

**व्याख्या**—यत्र = येषु लोकेषु, आनन्दाः = आत्मसाक्षात्कृतानि सुखानि, ( यत्र = येषु लोकेषु ) मोदाः = दिव्यसुखानि, यत्र = येषु लोकेषु, पुण्याः = परमोत्तमाः, सम्पदः = अणिमादि विभूतयश्च, सन्तीति शेषः, ते = प्रथिताः, तैजसाः = तेजोमयाः, शिवाः = मङ्गलकराः, वैराजाः नाम = 'वैराजाः' इति सुप्रथिताः, लोकाः = भुवनानि, ब्रह्मलोका इति यावत्, ते = तव, सन्तु = भवन्तु । समुच्चयालङ्कारोऽत्र । अनुष्टुब् नाम वृत्तम्, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥ इति ।

( ५१ ) अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यः
मामन्विष्यन्निह वृषलकं योजनानां शतानि ।
क्रान्त्वा प्राप्तः स इह तपसां सम्प्रसादोऽन्यथा चेत्
क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः ॥ २।१३ ॥

प्रसङ्गः—सुरतनुं सन्धार्य शम्बूकः सर्वैश्वर्यसम्पन्नं भगवन्तं रामं प्रति स्वकीयं विचारं प्रकटयन् तपसो महत्त्वमत्र वर्णयति ।

अन्वयः—( हे स्वामिन् ! ) भुवने अन्वेष्टव्यः, भूतनाथः, शरण्यः ( त्वं ) वृषलकं माम् अन्विष्यन् योजनानां शतानि क्रान्त्वा यद् इह प्राप्तोऽसि, स तपसां सम्प्रसादः, अन्यथा चेत् अयोध्यायाः दण्डकायां वने वः पुनः उपगमः क्व ।

व्याख्या—( भो स्वामिन् ! ) भुवने=जगति, अन्वेष्टव्यः = मार्गितव्यः, योगिभिः साक्षात्करणीय इत्याशयः, भूतनाथः = प्राणिनां पतिः, शरण्यः= शरणागतवत्सलः, ( त्वम् = रामः ) वृषलकम् = शूद्राधमम्, माम् = शम्बूकम्, अन्विष्यन् = विचिन्वन्, योजनानां शतानि = बहूनि योजनानि, क्रान्त्वा = अतिक्रम्य, यद् इह = अत्रिवने, प्राप्तोऽसि = आगतोऽसि, स = तवेहागमनम्, तपसाम् = मद्विहितायास्तपश्चर्यायाः, सम्प्रसादः = अनुग्रहः, फलमित्याशयः, अन्यथा चेत् = तपोऽर्जितपुण्याभावश्चेत्, अयोध्यायाः = साकेतनगर्याः, दण्डकायां वने = दण्डकारण्ये, वः = युष्माकम्, पुनः = भूयोऽपि, उपगमः = आगमनम्, क्व ? = कुतो भवेदित्याशयः । काव्यलिङ्गम्-अतिशयोक्ति-विषमालङ्काराश्चात्र । मन्दाक्रान्ता नाम वृत्तम् ।

( ५२ ) स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो झाङ्कृतैर्निर्झराणाम् ।
एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः
सन्दृश्यन्ते परिचितभुवो दण्डकारण्यभागाः ॥ २।१४ ॥

प्रसङ्गः—शूद्रमुनेः शम्बूकस्याऽऽननात् 'दण्डकायां वने वः' इति 'दण्डका' शब्दं निशम्य सञ्जातस्मृतिर्भगवान् रामचन्द्रोऽत्र चारुतया दण्डकां समुपवर्णयति ।

अन्वयः—क्वचित् स्निग्धश्यामाः, अपरतः भीषणाभोगरूक्षाः, स्थाने-स्थाने निर्झराणां झाङ्कृतैः मुखरककुभः, तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः एते परिचितभुवः दण्डकारण्यभागाः सन्दृश्यन्ते ।

व्याख्या—क्वचित् = कुत्रचित् भागे, स्निग्धश्यामाः = मनोहरनीलवर्णाश्च, अपरतः = अन्यत्र देशे, भीषणाभोगरूक्षाः = भयावहेन विस्तारेण चित्तक्षोभकराः,

स्थाने स्थाने = प्रतिस्थानम्, निर्झराणाम् = वारिप्रवाहाणाम्, झाङ्कृतैः = अधः-पतनशब्दैः, मुखरककुभः = प्रतिध्वनितदिशः, तीर्थाश्रमगिरिसरिद्गर्तकान्तार-मिश्राः = पुण्यक्षेत्रतपोवनपर्वतनदीगर्तदुर्गममार्गसमन्विताः, एते = पुरोवर्तिनः; परिचितभुवः = ज्ञातपूर्वभूमयः, दण्डकारण्यभागाः = दण्डकावनप्रदेशाः; सन्दृश्यन्ते = अवलोक्यन्ते, मयेति शेषः। स्वभावोक्तिरलङ्कारोऽत्र, मन्दाक्रान्ता नाम वृत्तम्।

(५३) निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः।
सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते॥ २।१६॥

**प्रसङ्गः**—जनस्थानस्य रोमहर्षणकारितां समर्थयन् शम्बूको भगवन्तं राम-चन्द्रं प्रति दण्डककाननस्य भीषणतामत्र वर्णयति।

**अन्वयः**—क्वचित् निष्कूजस्तिमिताः, क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः, स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः, प्रदरोदरेषु विरलस्वल्पाम्भसः सीमानः (सन्ति)। यासु तृष्यद्भिः प्रतिसूर्यकैः अयम् अजगरस्वेदद्रवः पीयते।

**व्याख्या**—क्वचित् = कुत्रचिदंशे, निष्कूजस्तिमिताः = निःशब्दनिश्चलाश्च; क्वचिदपि = अन्यत्र स्थाने, प्रोच्चण्डसत्त्वस्वनाः = भयङ्करजन्तुशब्दाः, स्वेच्छा-सुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः—स्वेच्छया = यथेच्छम्, सुप्तानाम् = गाढं निद्रितानाम्, गभीरः = विशालः, भोगः=देहः, येषां तेषां भुजगानाम् = सर्पाणाम्, श्वासैः = निःश्वासमारुतैः, प्रदीप्ताः = संधुक्षिताः, अग्नयः = दावानलाः, यासु तथाभूताः, प्रदरोदरेषु—प्रदराणाम् = पर्वतगर्तानाम्, उदरेषु=मध्यभागेषु, विर-लस्वल्पाम्भसः—विरलानि स्वल्पानि च जलानि यास्वेवंविधाः, सीमानः = प्रान्तभूमयः, (सन्ति) यासु = सीमासु, तृष्यद्भिः = तृषातुरैः, प्रतिसूर्यकैः = कृकलासैः, अयम् = एषः, अजगरस्वेदद्रवः—अजगरस्य = एतन्नामकस्य सर्पस्य, स्वेदद्रवः = प्रस्वेदजललव एव, पीयते = पानं विधीयते, जलाभावादिति शेषः। स्वभावोक्तिरलङ्कारोऽत्र। शार्दूलविक्रीडितं नाम वृत्तम्।

(५४) न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः॥ २।१९॥

**प्रसङ्गः**—भगवान् रामो जनस्थानवृत्तान्तात् जानकीं संस्मृत्य स्वचेतसि सीतामेवाभिलक्ष्य विचारयत्यत्र।

**अन्वयः**—यः यस्य प्रियः जनः, तत् तस्य किमपि द्रव्यम्, ( सः ) किञ्चिदपि न कुर्वाणः सौख्यैः दुःखानि अपोहति हि ।

**व्याख्या**—यः यस्य प्रियः = वल्लभः, जनः = पुरुषः, तत् = प्रीतिभाजनं जनः, तस्य = मानवस्य, किमपि = असाधारणम्, अनिर्वचनीयमित्याशयः, द्रव्यम् = वस्तु, धनं वा, अस्तीति शेषः, ( सः = प्रियो जनः ) किञ्चित् = किमपि, न कुर्वाणोऽपि = न विदधदपि, सौख्यैः—सुखान्येव सौख्यानि, तैः = स्वसन्निधिमात्रजनितैः सुखसन्तानैः, दुःखानि = कष्टानि, अपोहति = निरस्यति, हि = इति निश्चयेन । अर्थान्तरन्यासालङ्कारोऽत्र, अप्रस्तुतप्रशंसा च । अनुष्टुब्नाम वृत्तम्, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघु पञ्चमम् ।
द्विचतुर्थपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ।। इति ।

( ५५ ) इह समदशकुन्ताक्रान्तवानीरमुक्त-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ।। २।२० ।।

**प्रसङ्गः**—भगवत्याः सीतादेव्याः संस्मरणेन सदुःखं महाराजं रामं विज्ञाय महारण्यदर्शनेन रामस्य मानसविनोदार्थं तद्दुःखं न्यूनीकर्तुमभिलाषया शम्बूकोऽत्र रामं प्रति प्रशान्तगभीराणि मध्यमारण्यकानि चारुतया समुपवर्णयति ।

**अन्वयः**—इह समदशकुन्ताक्रान्तवानीरमुक्तप्रसवसुरभिशीतस्वच्छतोया फलभरपरिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसः निर्झरिण्यः वहन्ति ।

**व्याख्या**—इह = अत्र मध्यमारण्यकेषु, समदशकुन्ताक्रान्तवानीरमुक्तप्रसवसुरभिशीतस्वच्छतोया—समदाः = मदमत्ताः, ये शकुन्ताः = पक्षिणः, तैः आक्रान्ताः = आरूढाः, ये वानीराः = वेतसः, तेभ्यः मुक्ताः = स्खलिताः, ये प्रसवाः = पुष्पाणि, तैः सुरभीणि = वासितानि, शीतानि = ग्रीष्मेऽपि शीतलानि, स्वच्छानि = प्रसन्नानि, तोयानि = जलानि, यासां ताः, फलभरपरिणामश्यामजम्बूनिकुञ्जस्खलनमुखरभूरिस्रोतसः—एवं च फलभरस्य = फलराशेः, परिणामेन = पक्वतया, श्यामाः = कृष्णवर्णाः, ये जम्बूनिकुञ्जाः = जम्बूवृक्षगुल्माः, तेषु स्खलनेन = वेगप्रतिघातेन, मुखराः = शब्दायमानाः, भूरीणि = भूयांसि, स्रोतांसि = प्रवाहाः, यासां ताः, निर्झरिण्यः = कूलङ्कषाः, गिरिनद्य इत्याशयः, वहन्ति = स्यन्दन्ते । स्वभावोक्तिरलङ्कारोऽत्र । मालिनी नाम वृत्तम्, तल्लक्षणं यथा—

'ननमयययुतेयं मालिनी भोगिलोकैः' । इति ।

(५६) दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ २।२१ ॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० ५५ ।

**अन्वयः**—अत्र कुहरभाजां भल्लूकयूनाम् अनुरसितगुरूणि अम्बूकृतानि स्त्यानं दधति, सल्लकीनां शिशिरकटुकषायः इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः स्त्यायते ।

**व्याख्या**—अत्र = एषु मध्यमारण्यकेषु, कुहरभाजाम् = गर्तशायिनाम्, भल्लूकयूनाम् = तरुणभल्लूकानाम्, अनुरसितगुरूणि—अनुरसितैः = प्रतिध्वनिभिः, गुरूणि = महान्ति, पुष्टतराणीत्याशयः, अम्बूकृतानि = सनिष्ठीवध्वन्यः, स्त्यानम् = वृद्धिः, वैपुल्यं वा, दधति = भजन्ति, किञ्च सल्लकीनाम् = गजभक्ष्याणां, लताविशेषाणाम्, शिशिरः = शीतलः, कटुः = तीक्ष्णः, कषायः = सुरभिश्च, इभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः—इभैः = गजैः, दलिताः = विदारिताः मर्दिताश्च, विकीर्णाः = परितो विक्षिप्ताश्च, ये ग्रन्थयः = पर्वाणि, तेषां निष्यन्दस्य = स्वरसद्रव्यस्य, गन्धः = आमोदः, स्त्यायते = वर्धते, विसरति वा । स्वभावोक्तिरलङ्कारोऽत्र, मालिनी नाम वृत्तम् ।

(५७) एतत्पुनर्वनमहो कथमद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः ।
आरण्यकाश्च गृहिणश्च रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥ २।२२ ॥

**प्रसङ्गः**—मुनिपुङ्गवं महर्षिमगस्त्यं प्रणमितुं शम्बूके प्रयाते सति रामचन्द्रस्तत्रत्यवस्तुजातं सम्यगवलोक्य सखेदं स्वचेतसि विचारयत्यत्र ।

**अन्वयः**—अहो ! अद्य एतत् वनं पुनः कथं दृष्टम्, यस्मिन् पुरा चिरमेव वसन्तः आरण्यकाः गृहिणश्च वयं स्वधर्मे रताः, सांसारिकेषु सुखेषु रसज्ञाश्च अभूम ।

**व्याख्या**—अहो ! = आश्चर्यम्, अद्य = अस्मिन्वासरे, एतत् = पुरोवर्ति, वनम् = अरण्यम्, पुनः = भूयः, कथम् = केन प्रकारेण, दृष्टम् = ईक्षितम्, यस्मिन् = यत्र

वने, पुरा=पूर्वकाले, प्रवाससमये, चिरमेव=दीर्घकालम्, चतुर्दशवर्षाणि, वसन्तः= निवसन्तः, आरण्यकाः=अरण्यसदो वानप्रस्थाः, गृहिणश्च=गृहस्थाश्रमिणश्च, वयम्=रामचन्द्रादयः, स्वधर्मे=मुनिव्रते, रताः=तत्पराः, सांसारिकेषु=संसार-सम्बन्धिषु, सुखेषु=विषये, रसज्ञाः=ज्ञातास्वादाश्च, अभूम=सञ्जाताः। तुल्ययोगिताऽलङ्कारोऽत्र। वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः'। इति।

(५८) एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि।
आमञ्जुवञ्जुललतानि च तान्यमूनि
नीरन्ध्रनीपनिचूलानि सरित्तटानि॥ २।२३॥

प्रसङ्गः—द्रष्टव्यम्, श्लो० ५७।

अन्वयः—एते ते एव विरुवन्मयूराः गिरयः, तानि एव मत्तहरिणानि वनस्थलानि, अमूनि च तानि आमञ्जुवञ्जुललतानि नीरन्ध्रनीपनिचुलानि सरित्तटानि (सन्ति)।

व्याख्या—एते=पुरोवर्त्तिनः, ते एव=पूर्वपरिचिताः, विरुवन्मयूराः—विरुवन्तः=कूजन्तः, मयूराः=बर्हिणः, येषु ते, गिरयः=पर्वताः, सन्तीति शेषः; तानि एव=पूर्वदृष्टान्येवेमानि, मत्तहरिणानि—मत्ताः=मदयुक्ताः, हरिणाः= मृगाः, येषु तानि, वनस्थलानि=काननभूमयः, वर्तन्त इति शेषः, अमूनि=दूरे दृश्यमानानि च, तानि=पूर्वानुभूतानि, आमञ्जुवञ्जुललतानि—आमञ्जवः= आ समन्तात् मञ्जवः, परममनोहरा इत्याशयः, वञ्जुललताः= वेतसलताः, येषु तादृशानि, नीरन्ध्रनीपनिचुलानि—नीरन्ध्राः=छिद्ररहिताः, सघना इत्याशयः, नीपाः=कदम्बाः, निचुलाः=हिज्जलाश्च येषु तादृशानि, सरित्तटानि=नदीतीरभूमयः, सन्तीति शेषः। तुल्ययोगिताऽलङ्कारोऽत्र। वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः'। इति।

(५९) अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु।
गोदावर्याः पयसि विततश्यामलानोकहश्री-
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः॥ २।२५॥

**प्रसङ्गः**—प्रस्रवणपर्वतं विलोक्य रामचन्द्रः 'अत्रैव जटायोर्वासोऽप्यासीदि'ति वर्णनपुरस्सरं काननसुषमां चारुतया समुपवर्णयत्यत्र ।

**अन्वयः**—अस्य एव महति शिखरे गृध्रराजस्य वासः आसीत्, तस्य अधस्तात् वयम् अपि तेषु पर्णोटजेषु रताः, यत्र गोदावर्याः पयसि विततश्यामलानोकहश्रीः ( किञ्च ) अन्तःकूजन्मुखरशकुनः रम्यः वनान्तः ।

**व्याख्या**—अस्य = प्रस्रवणस्याचलस्य एव, महति = उन्नते, शिखरे = शृङ्गे, गृध्रराजस्य = जटायोः, वासः = निवासस्थानम्, आसीत् = अभूत्, तस्य = उत्तुङ्गशृङ्गस्य, अधस्तात् = अधःप्रदेशे, वयम् अपि = रामचन्द्रादयोऽपि, तेषु = पूर्वानुभूतेषु, पर्णोटजेषु = पर्णशालासु, रताः = सुखेन स्थिताः, यत्र = येषां समीपे, गोदावर्याः = एतन्नाम्न्याः नद्याः, पयसि = जले, विततश्यामलानोकहश्रीः— वितता = विस्तीर्णा, प्रतिबिम्बिता इत्याशयः, श्यामलानाम् = हरितानाम्, अनोकहानाम् = पादपानाम्, श्रीः = शोभा, यस्मिन् तादृशः, ( किञ्च ) अन्तःकूजन्मुखरशकुनः—अन्तः = पत्रमध्ये, कूजन्तः = रुवन्तः, मुखराः = गीतपराः, शकुनाः = पक्षिणः, यस्मिन् तादृशः, रम्यः = रमणीयः, वनान्तः = वनप्रदेशः, आसीदिति शेषः । स्वभावोक्तिरलङ्कारोऽत्र, मन्दाक्रान्ता वृत्तम् ।

**( ६० ) चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः**
**कुतश्चित्संवेगात्प्रचल इव शल्यस्य शकलः ।**
**व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः**
**घनीभूतः शोको विकलयति मां मूर्च्छयति च ॥ ३।३६ ॥**

**प्रसङ्गः**—पुरातनोऽपि शोकः प्रत्यग्र इव सम्भूय मामतिशयेन सम्पीडयतीत्येवं रूपेण स्वचेतसि विचारयन् रामचन्द्रोऽत्र निगदति ।

**अन्वयः**—चिराद्वेगारम्भी प्रसृतः तीव्रः विषरस इव, कुतश्चित् संवेगात् प्रचलः शल्यस्य शकलः इव, रूढग्रन्थिः पुनः स्फुटित हृन्मर्मणि व्रणः इव, घनीभूतः शोकः मां विकलयति मूर्च्छयति च ।

**व्याख्या**—चिरात् = बहोः कालात्, परं, वेगेन = जवेन, आरम्भः = प्रक्रिया, विद्यते अस्येति चिराद्वेगारम्भी = दीर्घकालानन्तरजवपुरस्सरारम्भशीलः, प्रसृतः = शरीरावयवेषु व्याप्तः, तीव्रः = दारुणः, विषरसः = विषद्रवः, इव = यथा, कुतश्चित् = कुतोऽपि निमित्तवशात्, संवेगात् = अतिजवात्, प्रचलः = प्रचलितः, शल्यस्य = बाणाग्रस्य, शकलः = खण्डः, इव = यथा, रूढग्रन्थिः = सञ्जातबन्धनः, पुनः = भूयः, स्फुटितः = विदलितः, हृन्मर्मणि = हृदयमर्मस्थलेयः, व्रणः =

स्फोटः, इव = यथा, घनीभूतः = गाढतामापन्नः, शोकः = सीताविरहसन्तापः, माम् = रामम्, विकलयति = व्याकुलीकरोति, मूर्च्छयति च = सम्मोहयति च। उत्प्रेक्षालङ्कारोऽत्र। शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'। इति।

( ६१ ) पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति ॥ २।२७ ॥

**प्रसङ्गः**—प्रस्रवणाचलस्यावलोकनाऽनन्तरं पुरातनः शोकः प्रत्यग्रो भूत्वा मां विकलयतीति प्रोच्य तत्रभूतानि नैकानि परिवर्तनानि वीक्ष्य 'अनवस्थितो भूतसन्निवेशः' इति मतं द्रढयति रामचन्द्रोऽत्र।

**अन्वयः**—पुरा यत्र सरितां स्रोतः, अधुना तत्र पुलिनम्, क्षितिरुहां घनविरलभावः विपर्यासं यातः, बहोः कालात् दृष्टम् इदं वनम् अपरमिव मन्ये, शैलानां निवेशः 'इदं तत्' इति बुद्धिं द्रढयति।

**व्याख्या**—पुरा = प्राक्, जानक्या सहावस्थानकाले—इत्याशयः, यत्र = यस्मिन् स्थाने, सरिताम् = नदीनाम्, स्रोतः = प्रवाहः, आसीदिति शेषः, अधुना = साम्प्रतम्, तत्र = तस्मिन् स्थाने, पुलिनम् = तोयोत्थितं तटम्, विद्यत इति शेषः, क्षितिरुहाम् = पादपानाम्, घनविरलभावः = निबिडत्वम्, विपर्यासम् = वैपरीत्यम्, यातः = अधिगतः, बहोः = दीर्घात्, कालात् = समयात्, परमिति शेषः, दृष्टम् = विलोकितम्, इदम् = पुरोवर्ति, वनम् = विपिनम्, अपरमिव = अन्यमिव, मन्ये = समुत्प्रेक्षे, शैलानाम् = अचलानाम्, निवेशः = पूर्ववदवस्थानम्, 'इदम् = परिदृश्यमानं वनम्, तत् = पूर्वदृष्टम्', इति = एवम्प्रकारेण, बुद्धिम् = ज्ञानम्, द्रढयति = सुदृढीकरोति। काव्यलिङ्गोत्प्रेक्षालङ्कारावत्र। शिखरिणी नाम वृत्तम्।

( ६२ ) यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे
यत्सम्बन्धिकथाभिरेव सततं दीर्घाभिरास्थीयत।
एकः सम्प्रति नाशितप्रियतमस्तामद्य रामः कथं
पापः पञ्चवटीं विलोकयतु वा गच्छत्वसम्भाव्य वा ॥ २।२८ ॥

**प्रसङ्गः**—खिन्नमना रामचन्द्रोऽत्र 'परिहरन्तमपि मां पञ्चवटीं स्नेहाद् बलादाकर्षतीव' इति निगदन् स्वीयं मतं समर्थयते।

अन्वयः—यस्यां ते दिवसाः तया सह मया यथा स्वे गृहे नीताः, दीर्घाभिः यत्सम्बन्धिकथाभिः एव सततम् आस्थीयत, सम्प्रति तां पञ्चवटीं नाशितप्रियतमः पापः रामः अद्य एकः कथं विलोकयतु, असम्भाव्य वा कथं गच्छतु ।

व्याख्या—यस्याम् = पञ्चवटयाम्, ते = सुखमयाः, दिवसाः = दिनानि, तया सह = सीतया सह, मया = रामेण, यथा = येन प्रकारेण, स्वे गृहे = स्वकीये राजभवने, ( इव ) नीताः = अतिवाहिताः, दीर्घाभिः = अतिविस्तृताभिः, यत्सम्बन्धिकथाभिः = यत्पञ्चवटीविषयकवार्ताभिः, एव = निश्चयेन, सततम् = निरन्तरम्, आस्थीयत = स्थितम्, आवाभ्यामिति शेषः, सम्प्रति = अधुना, ताम् = तथाविधाम्, पञ्चवटीम् = पञ्चवटीभूमिम्, नाशितप्रियतमः—नाशिता—नाशं प्रापिता, प्रियतमा = सीता, येन सः, पापः = पापात्मा, नृशंसकर्मा इत्याशयः, रामः, अद्य = अस्मिन् दिवसे, एकः = एकाकी, कथम् = केन प्रकारेण, विलोकयतु = पश्यतु, असम्भाव्य = अनादृत्य, वा = अथवा, कथम् = केन प्रकारेण, गच्छतु = यातु, जानक्या सह पूर्वाऽनुभूतायां पञ्चवटयां गमनं तत्परिवर्जनं चैतद्द्वयमपि मत्कृते साम्प्रतं दुष्करमित्याशयः । उपमालङ्कारोऽत्र, काव्यलिङ्गञ्च । शार्दूलविक्रीडितं नाम वृत्तम् ।

( ६३ ) गुञ्जत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चाभिधोऽयं गिरिः ।
एतस्मिन्प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः ॥ २।२९ ॥

प्रसङ्गः—महर्षेरगस्त्यस्यानुरोधेन तस्याश्रमं प्रति गच्छन्तं रामचन्द्रं प्रति शम्बूकः क्रौञ्चाख्यशैलस्य सुषमां सन्दर्शयितुं निगदत्यत्र ।

अन्वयः—गुञ्जत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचकस्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चाभिधोऽयं गिरिः ( अस्ति ), एतस्मिन् प्रचलतां प्रचलाकिनां कूजितैः उद्वेजिताः कुम्भीनसाः पुराणरोहिणतरुस्कन्धेषु उद्वेल्लन्ति ।

व्याख्या—गुञ्जत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचकस्तम्बाडम्बरमूकमौकुलिकुलः—कुञ्जाः = लताद्याच्छादितस्थानानि, एव कुटीराः = अल्पाः कुटयः इति कुञ्जकुटीराः, गुञ्जन्तः = अव्यक्तशब्दवन्तो ये कुञ्जकुटीरास्तेषु कौशिकघटा = उलूकपङ्क्तयः, तासां यो घुत्कारः = घुत्करणम्, 'घुत्' इत्याकारको योऽव्यक्तशब्द इत्याशयः, तद्वन्तः = तादृशशब्दयुक्ता; ये कीचकाः = वंशविशेषाः; तेषां ये स्तम्बाः = काण्डाः, तेषां य आडम्बरः = शब्दः, तेन मूकानि—निःशब्दानि,

मौकुलिकुलानि = वायसवृन्दानि, यस्मिन् स, क्रौञ्चाभिधः = क्रौञ्चनामकः, अयम् = पुरो दृश्यमानः, गिरिः = पर्वतः, विद्यत इति शेषः, एतस्मिन् = क्रौञ्च-शैले, प्रचलताम् = प्रचलनं कुर्वताम्, प्रचलाकिनाम् = मयूराणाम्, कूजितैः = शब्दैः, उद्वेजिता = भीताः, कुम्भीनसाः = भुजगाः, पुराणरोहिणतरुस्कन्धेषु = प्राचीन-चन्दनद्रुमप्रकाण्डदेशेषु, उद्वेल्लन्ति = इतस्ततश्चलन्ति । स्वभावोक्तिरूपका-लङ्कारयोः साङ्कर्यमत्र । शार्दूलविक्रीडित वृत्तम् ।

(६४) एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दाक्षिणाः ।
अन्योऽन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्सङ्गमाः ॥ २।३० ॥

प्रसङ्गः—महर्षेरगस्त्यस्यानुरोधेन तस्याश्रमं प्रति गच्छन्तं रामचन्द्रं प्रति शम्बूकः क्रौञ्चाख्यगिरेः दक्षिणदिशि वर्तमानानां पर्वतानां सरित्सङ्गमानाञ्च वर्णनं विदधात्यत्र ।

अन्वयः—एते ते कुहरेषु गद्गदनदद्गोदावरीवारयः मेघालम्बितमौलिनील-शिखराः दाक्षिणाः क्षोणीभृतः, इमे ते अन्योऽन्यप्रतिघातसङ्कुलचलत्कल्लोल-कोलाहलैः उत्तालाः गभीरप्रयासः पुण्याः सरित्सङ्गमाः ।

व्याख्या—एते = इमे दृश्यमानाः, ते = पूर्वपरिचिताः, कुहरेषु = गुहासु, गद्गदनदद्गोदावरीवारयः—गद्गदम् = अव्यक्तशब्दं यथा तथा, नदन्ति = शब्दा-यमानानि, गोदावरीवारीणि = गोदावरीजलानि, येषु ते, मेघालम्बितमौलिनील-शिखराः—मेघैः = जलदैः, आलम्बिताः = आक्रान्ताः, मौलयः = चूडा, अग्र-भागा इत्याशयः, तैः नीलानि शिखराणि = शृङ्गाणि, येषां तथाविधाः, दाक्षिणाः = दक्षिणदिशावर्तिनः, क्षोणीभृतः = भूधराः, सन्तीति शेषः, इमे = पुरतो दृश्य-मानाः, ते = पूर्वपरिचिताः, अन्योऽन्यप्रतिघातसङ्कुलचलत्कल्लोलकोलाहलैः—अन्योऽन्येषाम् = परस्परेषाम्, प्रतिघातेन = सङ्घर्षेण, सङ्कुलाः = सङ्कीर्णाः, चलन्तश्च ये कल्लोलाः = महोर्मयः, तेषां कोलाहलैः = नादैः, उत्तालाः = मुखराः, उत्कटा वा, गभीरपयसः—गभीराणि = अगाधानि, पयांसि = जलानि, येषां ते तथोक्ताः, पुण्याः = पवित्राः, सरित्सङ्गमाः = नदीसन्निपाताः, विद्यन्ते इति शेषः । स्वभावोक्ति-रलङ्कारोऽत्र, केषाञ्चिन्मते तदगुणालङ्कारोऽपि । शार्दूलविक्रीडितं नाम वृत्तम्, तल्लक्षणं यथा—'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति ।

---

( ६५ ) अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ ३।१ ॥

प्रसङ्गः—सीतापरित्यागानन्तरं भगवतो रामस्य या दशा सञ्जाता, तस्या एव वर्णनमादौ मुरला कुरुतेऽत्र ।

अन्वयः—गभीरत्वाद् अनिर्भिन्नः ( अत एव ) अन्तर्गूढघनव्यथः रामस्य करुणो रसः पुटपाकप्रतीकाशः ( अस्तीति शेषः ) ।

व्याख्या—गभीरत्वाद् = गाम्भीर्यत्वाद्, अनिर्भिन्नः = बहिरप्रकाशितः, अन्तर्गूढघनव्यथः—अन्तः = अभ्यन्तरे, हृदये इत्याशयः, गूढा = गुप्ता, घना= निविडा, व्यथा = दुःखम्, यस्य स तथोक्तः, रामस्य=सीतापत्युः, करुणो रसः= सीताविरहजन्यशोकः, पुटपाकप्रतीकाशः — पुटे = लोहादिमयौषधपाकपात्रे, पाकः = पचनम्, यस्य सः पुटपाकः=औषधविशेषः, तेन सदृशः=तुल्यः, अस्तीति शेषः । पूर्णोपमाऽलङ्कारोऽत्र । अनुष्टुब्वृत्तम्, तल्लक्षण यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम् ।
द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः' ॥ इति ॥

( ६६ ) वीचीवातैः शीकरक्षोदशीतैराकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं स्वैरं स्वैरं प्रेरितैस्तर्पयेति ॥ ३।२ ॥

प्रसङ्गः—शोकसन्तप्तो रामचन्द्रः पञ्चवटीप्रदेशान् वीक्ष्य शोकस्यावेगादनर्थं मा कुर्यादिति भगवत्या गोदावर्या सावधानतया भवितव्यमिति प्रोच्य मुरला नाम्नी नदी सावधानतायाः प्रकारं गोदावरीं प्रति विनिर्दिशत्यत्र ।

अन्वयः—शीकरक्षोदशीतैः पद्मकिञ्जल्कगन्धान् आकर्षद्भिः स्वैरं-स्वैरं प्रेरितैः वीचीवातैः रामभद्रस्य जीवं मोहे-मोहे तर्पय इति ।

व्याख्या—शीकरक्षोदशीतैः = जलकणचूर्णशीतलैः, पद्मकिञ्जल्कगन्धान् = कमलकेशरसौरभाणि, आकर्षद्भिः = हरद्भिः, स्वैरं-स्वैरम् = मन्द-मन्दं यथा स्यात्तथा, प्रेरितैः = सम्प्रेषितैः, वीचीवातैः = तरङ्गसम्पृक्तवायुभिः, रामभद्रस्य = सीतापत्युः रामचन्द्रस्य, जीवम् = जीवनम्, चेतनां वा, मोहे-मोहे = प्रतिमोहावस्थायाम्, तर्पय = प्रीणय, इति = मुरलामुखेन सन्दिष्टस्यागस्त्यपत्न्याः वाक्यजातस्य समाप्तिसूचकमव्ययम् । स्वभावोक्तिरलङ्कारोऽत्र । शालिनी नाम वृत्तम्, तल्लक्षणं यथा—

'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' । इति ।

( ६७ ) ईदृशानां विपाकोऽपि जायते परमाद्भुतः ।
यत्रोपकरणीभावमायात्येवंविधो जनः ॥ ३।३ ॥

**प्रसङ्गः**—जानक्याः परित्यागे कुशलवयोरुत्पत्तौ च 'गंगापृथिवीभ्यां सीतायामनुग्रहो विहित इति तमसामुखेन समाकर्ण्य साश्चर्यं स्वकीयं भावमत्रोद्गिरति मुरला ।

**अन्वयः**—ईदृशानां विपाकोऽपि परमाद्भुतः जायते, यत्र एवंविधो जनः उपकरणीभावम् आयाति ।

**व्याख्या**—ईदृशानाम्=एवंविधानां मैथिलिसदृशानाम्, अप्राकृतजनानामित्याशयः, विपाकोऽपि=विषमोऽपि परिणामः, दशाविपर्यासोऽपि, परमाद्भुतः=अतिविस्मयावहः, जायते=भवति, यत्र=यस्मिन् विपाके, एवंविधः=पृथ्वीभागीरथीवाल्मीकितुल्यः, जनः=लोकः, उपकरणीभावम्=उपकारित्वम्, आयाति=प्राप्नोति, साहाय्यं विदधातीत्याशयः । काव्यलिङ्गालङ्कारोऽत्र । अनुष्टुब्वृत्तम् ।

( ६८ ) परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ ३।४ ॥

**प्रसङ्गः**—'इयं जानकी गोदावर्याः बहुतरजलमध्यात् ( ह्रदात् ) निष्क्रम्यागच्छति' इति व्याहरन्ती तमसा नदी सीतायाः दशामत्र चारुतया समुपवर्णयति ।

**अन्वयः**—परिपाण्डुदुर्बलकपोलसुन्दरं विलोलकबरीकम् आननं दधती करुणस्य मूर्तिः अथवा शरीरिणी विरहव्यथेव जानकी वनम् एति ।

**व्याख्या**—परिपाण्डुदुर्बलकपोलसुन्दरम्—परितः पाण्डू परिपाण्डू=अतिशयविरहेण परितः श्वेतौ, दुर्बलौ=कृशौ, कपोलौ=गण्डौ, यस्मिस्तत्, तच्च तत् सुन्दरम्=मनोहरम्, तादृशपरिपाण्डुकृशगण्डस्थलाभ्याम् उपलक्षितमपि स्वभावसुन्दरमित्याशयः, विलोलकबरीकम्—विलोला=संस्काराभावात् चञ्चला, कबरी=केशवेशः, यस्मिन् तत्तथोक्तम्, आननम्=मुखम्, दधती=धारयन्ती, करुणस्य मूर्तिः=मूर्तिमान् करुणरस इव, अथवा=आहोस्वित्, शरीरिणी=शरीरधारिणी, विरहव्यथेव=रामवियोगवेदना इव, जानकी=सीता, वनम्=

पञ्चवटीकाननम्, एति = प्राप्नोति, प्रविशतीत्याशयः। उत्प्रेक्षाऽलङ्कारोऽत्र। मञ्जुभाषिणी वृत्तम्, तल्लक्षणं यथा—

'सजसाजगौ भवति मञ्जुभाषिणी'। इति।

( ६९ ) किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकमलशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ३।५ ॥

प्रसङ्गः—तमसायाः मुखेन सीतायाः दशां समाकर्ण्य 'इयं हि सा' इति निगदन्ती मुरलाऽपि मैथिल्याः शोचनीयां दशां चारुतयाऽत्र समुपवर्णयति।

अन्वयः—हृदयकमलशोषी दारुणः दीर्घशोकः बन्धनात् विप्रलूनं मुग्धं किसलयम् इव परिपाण्डुक्षामम् अस्याः शरीरं शरदिजः घर्मः केतकीगर्भपत्रम् इव ग्लपयति।

व्याख्या—हृदयकमलशोषी = चित्तारविन्दशोषकः, दारुणः = दुःसहः, दीर्घशोकः = दीर्घकालव्यापीविरहदुःखम्, बन्धनात् = वृन्तात्, विप्रलूनम् = प्रसह्य छिन्नम्, मुग्धम् = मनोहरम्, किसलयम् = नवपल्लवम्, इव = यथा, परिपाण्डु = रामविरहेणातिश्वेतम्, अस्याः = सीतायाः, शरीरम् = देहम्, शरदिजः = शरदृतूत्पन्नः, घर्मः = आतपः, केतकीगर्भपत्रम् = केतकीपुष्पाऽभ्यन्तरदलम्, इव = यथा, ग्लपयति = म्लानं करोति। हृदयमेव कमलमित्यत्र रूपकम्, एतावता रूपकस्योपमाद्वयेनात्र सङ्करः। मालिनी नाम वृत्तम्, तल्लक्षणं यथा—

'ननमयययुतेयं मालिनी भोगिलोकैः'। इति।

( ७० ) सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा वर्धितोऽभूत्।
वध्वा सार्धं पयसि विहरन्सोऽयमन्येन दर्पा-
दुद्दामेन द्विरदपतिना सन्निपत्याभियुक्तः ॥ ३।६ ॥

प्रसङ्गः—पुनर्नेपथ्ये वासन्ती जानकीपाणिपङ्कजातसम्पोषितस्य वारणार्भकस्य तात्कालिकीं दशामत्र वर्णयति।

अन्वयः—पुरा सीतादेव्या यः अग्रे लोलः करिकलभकः स्वकरकलितैः सल्लकीपल्लवाग्रैः वर्धितोऽभूत्, सोऽयं वध्वा सार्धं पयसि विहरन् अन्येन उद्दामेन द्विरदपतिना दर्पात् सन्निपत्य अभियुक्तः।

**व्याख्या**—पुरा = प्राक्, रामस्य वनवाससमय इत्याशयः, सीतादेव्याः = जानक्याः, यः अग्रे = पुरतः, लोलः = चपलः, करिकलभकः = गजपोतः, स्वकरकलितैः = निजपाणिदत्तैः, सल्लकीपल्लवाग्रैः = गजभक्ष्यविटपकिसलयपुरोहैः, वर्धितोऽभूत् = पोषितो बभूव, सः = पूर्वपरिचितः, अयम् = पुरोवर्ती, वध्वा = स्वस्त्रिया, सार्धम् = साकम्, पयसि = उदके, विहरन् = जलक्रीडां विदधन्, अन्येन = अपरेण, उद्दामेन = उच्छृङ्खलेन, द्विरदपतिना = गजेन्द्रेण, दर्पात् = बलावलेपात्, सन्निपत्य = वेगेनाभिधाव्य, अभियुक्तः = समाक्रान्तः । सहोक्तिरलङ्कारोऽत्र, मन्दाक्रान्ता नाम वृत्तम्, तल्लक्षणं यथा—

'मन्द्राक्रान्ता जलधिषडगैर्म्भौ न तौ ताद् गुरू चेत्' । इति ।

**( ७१ ) यत्र द्रुमा अपि मृगा अपि बन्धवो मे**
**यानि प्रियासहचरश्चिरमध्यवात्सम् ।**
**एतानि तानि बहुनिर्झरकन्दराणि**
**गोदावरीपरिसरस्य गिरेस्तटानि ॥ ३।८ ॥**

**प्रसङ्गः**—महर्षेरगस्त्यस्याश्रमात् परावर्तितो रामचन्द्रः पञ्चवटीं विलोक्य नेपथ्ये निगदत्यत्र ।

**अन्वयः**—यत्र द्रुमाः अपि मृगाः अपि मे बन्धवः, यानि प्रियासहचरः चिरम् अध्यवात्सम्, तानि एतानि गोदावरीपरिसरस्य गिरेः बहुनिर्झरकन्दराणि तटानि ।

**व्याख्या**—यत्र = येषु पर्वततटेषु, द्रुमाः अपि = तरवोऽपि, मृगाः अपि = हरिणाः अपि, पशवोऽपि वा, ( 'मृगः पशौ कुरङ्गे च' इति मेदिनी ) मे = मम रामचन्द्रस्य, बन्धवः = लक्षणया बन्धुतुल्याः, आसन्निति शेषः, यानि = गिरितटानि, प्रियासहचरः = सीतासमन्वितः, चिरम् = दीर्घकालम्, अध्यवात्सम् = अध्युषितवान्, तानि = पूर्वपरिचितानि, एतानि = इमानि, गोदावरीपरिसरस्य—गोदावरीनामनदीपरिसरे = पर्यन्तभुवि, उपान्तप्रदेशे, यस्य तस्य, गिरेः = प्रस्रवणनाम्नः पर्वतस्य, बहुनिर्झरकन्दराणि—बहवः निर्झराः = वारिप्रवाहाः, कन्दराः = गुहाश्च, येषु तानि, तटानि = प्रस्थभागाः, सन्तीति शेषः । स्वभावोक्तिरर्थापत्तिश्चालङ्कारावत्र । वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' इति ।

**( ७२ ) अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः ।**
**उत्पीड इव धूमस्य मोहः प्रागावृणोति माम् ॥ ३।९ ॥**

प्रसङ्गः——भगवान् रामचन्द्रोऽत्र नेपथ्ये स्वकीयां दशां प्रकटयितुं व्याहरति।

अन्वयः——अन्तर्लीनस्य अद्य उद्दामं ज्वलिष्यतः दुःखाग्नेः धूमस्य उत्पीडः इव मोहः मां प्राक् आवृणोति।

व्याख्या—अन्तर्लीनस्य = हृदये प्रच्छन्नं संस्थितस्य, अद्य = अस्मिन् वासरे, उद्दामम् = उल्बणं यथा तथा, ज्वलिष्यतः = देदीपिष्यतः, बहिः प्रकटीभविष्यत इत्याशयः, दुःखाग्नेः = शोकानलस्य, धूमस्य = शिखिध्वजस्य, उत्पीडः = सङ्घातः, यद्वा सम्मर्दः, इव = यथा, मोहः = मूर्च्छा, माम् = रामम्, प्राक् = प्रथमम्, आवृणोति = सञ्छादयति। उपमाऽलङ्कारोऽत्र। अनुष्टुब्वृत्तञ्च, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम्।
द्वितुर्यपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः'॥ इति।

(७३) आश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः।
आतप्तजीवितपुनःपरितर्पणोऽयं
सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः॥ ३।११॥

प्रसङ्गः—मैथिलीपाणिसंस्पर्शेन प्रत्याश्वसन् रामचन्द्रोऽत्र साश्चर्यं स्वकीयं हृद्गतं भावमभिव्यनक्ति।

अन्वयः—हरिचन्दनपल्लवानाम् आश्च्योतनं नु? निष्पीडितेन्दुकरकन्दलजः सेकः नु? अयम् आतप्तजीवितपुनःपरितर्पणः सञ्जीवनौषधिरसः हृदि प्रसिक्तः नु?

व्याख्या—हरिचन्दनपल्लवानाम् = देवतरुविशेषकिसलयानाम्, आश्च्योतनम् = रसक्षरणम्, नु = इति वितर्केऽव्ययम्, निष्पीडितेन्दुकरकन्दलजः = निष्पिष्टचन्द्रकिरणनवाङ्कुरसमुत्पन्नः, सेकः = सेचनम्, नु = किम्? अयम् = एषः, आतप्तजीवितपुनःपरितर्पणः—आ समन्तात्, तप्तम् = विरहदग्धम्, जीवितम् = जीवनम्, तस्य पुनः = भूयः, परितर्पणः = तृप्तिकारकः, सञ्जीवनौषधिरसः = प्राणदायकभेषजद्रवः, हृदि = हृदये, प्रसिक्तः नु = प्रलिप्तः किम्? नाहं निश्चिनोमि किमेतदित्याशयः, सन्देहालङ्कारोऽत्र, वसन्ततिलका नाम वृत्तञ्च।

(७४) स्पर्शः पुरा परिचितो नियतं स एव
सञ्जीवनश्च मनसः परितोषणश्च।

सन्तापजां सपदि यः परिहृत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति ॥ ३।१२ ॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लो० ७३ ।

**अन्वयः**—नियतं सञ्जीवनः मनसः परितोषणश्च ( अयं ) सः एव पुरा परिचितः स्पर्शः, यः सन्तापजां मूर्च्छां सपदि परिहृत्य आनन्दनेन पुनः जडताम् आतनोति ।

**व्याख्या**—नियतम्=निश्चितम्, सञ्जीवनः=समुच्छ्वासनः, मनसः=चित्तस्य, परितोषणश्च=आह्लादजनकश्च, ( अयम्=एषः ) स एव=प्रथमानुभूत एव, पुरा=प्राक्, परिचितः=संस्तुतः, अभ्यस्त इत्याशयः, स्पर्शः=आमर्शनम्, यः=संस्पर्शः, सन्तापजाम्=विरहदुःखसमुद्भूताम्, मूर्च्छाम्=संज्ञाशून्यताम्, सपदि=तत्क्षणे, परिहृत्य=निरस्य, आनन्दनेन=आह्लादनेन, पुनः=भूयः, जडताम्=हर्षविह्वलताम्, आतनोति=विस्तारयति, विदधातीत्याशयः । विरोधालङ्कारोऽत्र, वसन्ततिलका नाम वृत्तम् ।

( ७५ ) तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिञ्झटितिघटनात्स्तम्भितमिव ।
प्रसन्नं सौजन्याद् दयितकरुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव ॥ ३।१३ ॥

**प्रसङ्गः**—मम हृदयस्य कीदृशी दशेति कथयन्तीं सीतां प्रति तमसा जानक्याः हृदयस्थितिमत्र चारुतया वर्णयति ।

**अन्वयः**—तव हृदयम् अस्मिन् क्षणे नैराश्यात् तटस्थम्, अपि च विप्रियवशात् कलुषम्, अस्मिन् दीर्घे वियोगे झटितिघटनात् स्तम्भितमिव, सौजन्यात् प्रसन्नं, दयितकरुणैः गाढकरुणं, प्रेम्णा द्रवीभूतम् इव ( अस्ति ) ।

**व्याख्या**—तव=सीतायाः, हृदयम्=मनः, अस्मिन्=वर्तमाने, क्षणे=अवसरे, नैराश्यात्=पुनः समागमस्य आशाया अभावात्, तटस्थम्=उदासीनम्, प्रसादकालुष्यादिरहितमित्याशयः, अपि च=तथा, विप्रियवशात्=निष्कारणपरित्यागरूपाद् अप्रियाद्धेतोः, कलुषम्=अप्रसन्नम्, रोषयुक्तमित्याशयः, अस्मिन् दीर्घे=चिरसन्तते, वियोगे=विरहे, झटितिघटनात्=आकस्मिकसमागमात्, स्तम्भितमिव=जडीभूतमिव, सौजन्यात्=भर्तुः सुजनतायाः हेतोः, प्रसन्नम्=कालुष्यरहितम्, प्रीतियुक्तमित्याशयः, दयितकरुणैः=प्रियशोकैः, गाढकरुणम्—गाढः=घनीभूतः, करुणः=शोकः, यस्य यस्मिन् वा तथाविधं, किञ्च, प्रेम्णा=

भर्तरि गाढानुरागेण, द्रवीभूतमिव = रसमयमिव, अस्तीति शेषः। अस्मिन् श्लोके नैराश्य-कालुष्य-स्तम्भत्व-प्रसन्नता-गाढकारुण्य-द्रवीभावादि विविधभावानां वर्णनात् भावशबलता, उत्प्रेक्षालङ्कारश्चापि। एकस्मिन् हृदये विरुद्धानां भावानां वर्णनाद् विरोधश्च। शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति।

( ७६ ) येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
व्याकृष्टस्ते सुतनु लवलीपल्लवः कर्णमूलात्।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
यत्कल्याणं वयसि तरुणे भाजनं तस्य जातः॥ ३।१५॥

प्रसङ्गः—तत्रभवान् रामो गजपुत्रं वधूसहितं समवलोक्य विदेहनन्दिनीं सीतां वर्धापयन्नत्र ब्रूते।

अन्वयः—हे सुतनु! उद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण येन ते कर्णमूलात् लवलीपल्लवः व्याकृष्टः मदमुचां वारणानां विजेता सोऽयं तव पुत्रकः तरुणे वयसि यत्कल्याणं तस्य भाजन जातः।

व्याख्या—शोभना तनूः यस्याः सा सुतनूः, तत्सम्बुद्धौ हे सुतनु! = भो शोभनशरीरे! उद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण = नवोद्भिन्नमृणालाङ्कुरकोमलदशनप्ररोहेण, येन = करिशावकेन, ते = तव, कर्णमूलात् = कर्णान्तिकात्, लवलीपल्लवः = लवलीलतायाः किसलयः, व्याकृष्टः = करेणाकृष्य गृहीतः, मदमुचाम् = दानस्राविणाम्, मत्तानामित्याशयः, वारणानाम् = गजानाम्, विजेता = परिभावकः, सोऽयम् = पूर्वप्रथितः, तव = सीतायाः, पुत्रकः = पुत्रीकृतः करिशावकः, तरुणे वयसि = यौवने, यत्कल्याणम् = मङ्गलसाधकम्, तस्य भाजनम् = पात्रम्, जातः = संवृत्तः। उपमाऽलङ्कारोऽत्र, मन्दाक्रान्ता वृत्तम्।

( ७७ ) लीलोत्खातमृणालकाण्डकवलच्छेदेषु सम्पादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसङ्क्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम्॥ ३।१६॥

प्रसङ्गः—'करिवरपोतोऽयं स्वसहचरीसमाराधननिपुणो जातः' इति प्रतिपादयन् रामचन्द्रोऽत्र गजपोतस्य स्वदयितानुवृत्तिचातुर्यं वासन्तीं प्रति समुपवर्णयति।

**अन्वयः**—यत् लीलोत्खातमृणालकाण्डकवलच्छेदेषु पुष्यत्पुष्करवासितस्य पयसः गण्डूषसङ्क्रान्तयः सम्पादिताः ( तथा ) शीकरिणा करेण सेकः विहितः, विरामे पुनः स्नेहात् अनरालनालनलिनीपत्रातपत्रं घृतम् ।

**व्याख्या**—यत् = यतः, लीलोत्खातमृणालकाण्डकवलच्छेदेषु = क्रीडोत्पाटित-विसदण्डग्रासावसानेषु, पुष्यत्पुष्करवासितस्य = विकसदरविन्दसुरभीकृतस्य, पयसः = जलस्य, गण्डूषसङ्क्रान्तयः = मुखजलसञ्चाराः, सम्पादिताः = अनुष्ठिताः, ( तथा ) शीकरिणा = जलकणयुक्तेन, करेण = शुण्डेन, सेकः = सेवनम्, विहितः = कृतः, विरामे = अन्ते, पुनः = भूयः, स्नेहात् = अनुरागातिशयाद्धेतोः, अनरालनालनलिनीपत्रातपत्रम् = अवक्रदण्डपद्मपत्रछत्रम्, धृतम् = सन्धारितम्, आतपनिवारणार्थः कान्तायाः मस्तकोपरि विततमित्याशयः । सम्भोगश्रृङ्गारस्य तिर्यग्गतत्वेन रसाभासताऽत्र । गजानां स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः, नलिनीपत्रे चातपत्रारोपणात् रूपकालङ्कारोऽपि । शार्दूलविक्रीडितं वृत्तम् ।

( ७८ ) अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ ३।१७ ॥

**प्रसङ्गः**—'परमप्रेमसम्पन्नयोरपि पति-पत्न्योः सन्तानाभावाच्चेतसि विरक्ति समुत्पद्यते, सांसारिकसुखेषु तयोश्चित्तावरोधकमपत्यमेव भवती'ति समर्थयन्ती तमसा सीतां प्रति स्वकीयं विचारमभिव्यनक्ति ।

**अन्वयः**—स्नेहसंश्रयात् दम्पत्योः अन्तःकरणतत्त्वस्य 'अपत्यम्' इति अयम् एकः आनन्दग्रन्थिः बध्यते ।

**व्याख्या**—स्नेहसंश्रयात् = वात्सल्यसंश्रयणात्, दम्पत्योः = जायापत्योः, अन्तःकरणतत्त्वस्य = अन्तःकरणरूपतत्त्वस्य, चित्तपदार्थस्येत्याशयः, 'अपत्यम्' इति = सन्तानस्वरूप इति, अयम् = एषः, एकः = अद्वितीयः, आनन्दग्रन्थिः = आनन्दमयो ग्रन्थिः, बध्यते = बन्धनं बध्यते, विधात्रेति शेषः । अपत्यरूपेण ग्रन्थिना दम्पत्योः हृदये अन्योऽन्येन सम्बध्येते, तच्च बन्धनम् आनन्दमयं न तु इतरबन्धनवद् दुःखमयमित्याशयः । अनुष्टुब्वृत्तमत्र ।

( ७९ ) अनुदिवसमवर्धयत्प्रिया ते
यमचिरनिर्गतमुग्धलोलबर्हम् ।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥ ३।१८ ॥

**प्रसङ्गः**—वासन्ती भगवन्तं रामचन्द्रं मयूरं निरीक्षितुमत्र चारुतया सम्प्रेरयति।

**अन्वयः**—अचिरनिर्गतमुग्धलोलबर्हं यं ते प्रिया अनुदिवसम् अवर्धयत्, स एषः उच्छिखः मणिमुकुटः इव शिखण्डी वधूसखः ( सन् ) कदम्बे नदति।

**व्याख्या**—अचिरनिर्गतमुग्धलोलबर्हम् = प्रत्यग्रोद्भिन्नमनोहरचञ्चलपिच्छम्, यम् = शिखण्डिनम्, ते = तव, प्रिया = कान्ता, अनुदिवसम् = दिवसे-दिवसे, प्रतिदिनमित्याशयः, अवर्धयत् = अपोषयत्, सः = पूर्वपरिचितः, एषः = पुरोवर्ती, उच्छिखः = उन्नतचूडः, मणिमुकुट = मणिजटितकिरीट, इव = यथा, शिखण्डी = मयूरः, वधूसखः = वधूसहितः, ( सन् ) कदम्बे = एतन्नामके वृक्षे, नदति = अव्यक्तस्वरेण केकारवं विदधाति। उपमाऽलङ्कारोऽत्र। पुष्पिताग्रा नाम वृत्तम्, तल्लक्षणं यथा—

'अयुजि नयुगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा'। इति।

( ८० ) भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुः
प्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि॥ ३।१९॥

**प्रसङ्गः**—वधूसहितं नृत्यन्तं शिखण्डिनं समवलोक्य सानन्दं श्रीरामचन्द्रोऽत्र निगदति।

**अन्वयः**—भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुः प्रचलितचटुलभ्रूताण्डवैः मण्डयन्त्या मुग्धया करकिसलयतालैः नर्त्यमानं त्वां सुतमिव वत्सलेन मनसा स्मरामि।

**व्याख्या**—भ्रमिषु = मयूरविहितचक्राकारभ्रमणेषु सत्सु, कृतपुटान्तर्मण्डलावृत्तिचक्षुः—कृता = विहिता, पुटान्तः = पुटस्यान्तः मध्ये, अक्षिकोटराभ्यन्तर इत्याशयः, मण्डलावृत्तिः = मण्डलाकारेण आवर्तनम्, येन तत् तथोक्तं चक्षुः = नेत्रम्, प्रचलितचटुलभ्रूताण्डवैः-प्रचलिते = अतिचञ्चले, चटुले = सुन्दरे, ये भ्रुवौ, तयोः ताण्डवैः = नर्तनैः, मण्डयन्त्या = भूषयन्त्या, मुग्धया = सरलया, कान्तयेति शेषः, करकिसलयतालैः—करौ = हस्तौ, किसलये = पल्लवे इव, तयोः पाणिपल्लवयोः तालैः = कालक्रियामानार्थं दत्ताभिः करतालिकाभिः, नर्त्यमानम् = कार्यमाणनृत्यम्, त्वाम् = शिखण्डिनम्, सुतमिव = निजपुत्रमिव, वत्सलेन = स्निग्धेन, मनसा = चेतसा, स्मरामि = सञ्चिन्तयामि। उपमाऽलङ्कारोऽत्र। मालिनी नामवृत्तम्, तल्लक्षणं यथा—

'ननमयययुतेयं मालिनी भोगिलोकैः' इति ।

( ८१ ) कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्धितोऽयमासीत् ।
स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति ॥ ३।२० ॥

प्रसङ्गः—सानन्दं शिखण्डिवृत्तान्तं समवलोक्य रामचन्द्रः स्वकीयं भावमत्रोद्गिरति ।

अन्वयः—कतिपयकुसुमोद्गमः अयं कदम्बः प्रियतमया परिवर्धितः आसीत्, एषः गिरिमयूरः देव्याः स्मरति, यतः अत्र स्वजने इव प्रमोदम् एति ।

व्याख्या—कतिपयकुसुमोद्गमः=विरलप्रसूनशोभितः, अयम्=पुरतो दृश्यमानः, कदम्बः=तदाख्यो वृक्षः, प्रियतमया=कान्तया, सीतयेत्याशयः, परिवर्धितः=जलसेकादिना वृद्धिं प्रापितः, आसीत्=अभूत्, एषः=पुरोवर्ती, गिरिमयूरः=गिरिप्रियः मयूरः, देव्याः स्मरति=देवीं सीतां संस्मरति, यतः=यस्मात्, अत्र=अस्मिन् कदम्बे, स्वजने इव=सीतासम्पर्कात् स्वभ्रातरि इव, प्रमोदम्=आनन्दम्, एति=अनुभवति । उपमाऽलङ्कारोऽत्र । पुष्पिताग्रा नाम वृत्तम्, तल्लक्षणं यथा—

'अयुजि नयुगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा' । इति ।

( ८२ ) एतत्तदेव कदलीवनमध्यवर्ति
कान्तासखस्य शयनीयशिलातलं ते ।
अत्र स्थिता तृणमदाद् बहुशो यदेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥ ३।२१ ॥

प्रसङ्गः—भूतपूर्वं शयनीयशिलातलं सन्दर्शयितुं रामचन्द्रं प्रति वासन्ती अत्र निगदति ।

अन्वयः—कान्तासखस्य ते एतत् तदेव कदलीवनमध्यवर्ति शयनीयशिलातलम्, अत्र स्थिता सीता यत् एभ्यः बहुशः तृणम् अदात्, ततः ( इदं ) हरिणकैः न विमुच्यते स्म ।

व्याख्या—कान्तासखस्य=प्रियासहचरस्य, ते=तव, एतत्=पुरतो दृश्यमानम्, तदेव=पूर्वानुभूतमेव, कदलीवनमध्यवर्ति=कदलीवनस्य मध्ये संस्थितम्, शयनीयशिलातलम्=शय्याभूतः शिलाखण्डः, अत्र=अस्मिन् शिलातले, स्थिता=

उपविष्टा, सीता = जानकी, यत् = यतः, एभ्यः = पुरोवर्तिभ्यः हरिणेभ्यः, बहुशः = बहुवारान्, तृणम् = शष्पम्, अदात् = दत्तवती, ततः = तस्माद्धेतोः, ( इदम् = पुरतो दृश्यमानं शिलातलम् ) हरिणकैः = कुरङ्गकैः, न विमुच्यते स्म = न त्यज्यते स्म, इदानीमपीति शेषः । वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' इति ।

( ८३ ) नवकुवलयस्निग्धैरङ्गैर्ददन्नयनोत्सवं
सततमपि नः स्वेच्छादृश्यो नवो नव एव यः ।
विकलकरणः पाण्डुच्छायः शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः ॥ ३।२२ ॥

प्रसङ्गः—चिन्ताचुम्बितां रामचन्द्रस्य दयनीयां दशां विलोकयितुं प्रत्यक्षेऽनुपस्थितामपि जानकीं प्रति स्नेह धिक्याद् वासन्ती सम्प्रार्थयतेऽत्र ।

अन्वयः—नवकुवलयस्निग्धैः अङ्गैः नयनोत्सवं ददत् सततमपि नः स्वेच्छादृश्यः अपि यः नवो नव एव ( आसीत् ) ( सम्प्रति तु ) शुचा विकलकरणः पाण्डुच्छायः परिदुर्बलः तथापि दृशोः प्रियः ( स रामः ) कथमपि 'सः' इति उन्नेतव्यः ।

व्याख्या—नवकुवलयस्निग्धैः = प्रत्यग्रारविन्दप्रीतिकरैः, अङ्गैः = गात्रैः, नयनोत्सवम् = लोचनानन्दम्, ददत् = वितरन्, सततमपि = निरन्तरमपि, नः = अस्माकम्, वासन्तीप्रभृतीन मित्याशयः, स्वेच्छादृश्यः = यथेच्छं द्रष्टुं शक्यः, अपि, यः = रामचन्द्रः, नवो नव एव = प्रतिक्षणं नवतामुपेत एव, ( आसीत् ) ( सम्प्रति तु ) शुचा = शोकेन, विकलकरणः = विह्वलेन्द्रियः, पाण्डुच्छायः = मलिनकान्तिः, परिदुर्बलः = अतिकृशः, तथापि = क्षीणमलिनाकृतिरपि, दृशोः प्रियः = लोचनानन्दनः, स रामः इति शेषः, कथमपि = केन प्रकारेणापि, 'स' इति = स एवायमिति, उन्नेतव्यः = अनुमेयः, प्रत्यभिज्ञातव्य इत्याशयः । उपमाऽलङ्कारोऽत्र, हरिणी नाम वृत्तम् ।

( ८४ ) विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती तृष्णयोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलबहलमुग्धा दुग्धकुल्येव दृष्टिः ॥ ३।२३ ॥

प्रसङ्गः—निजहृदयेश्वरं रामचन्द्रमवलोकयन्तीं मैथिलीं प्रति तमसा अत्र स्वकीयं भावमुदगिरति ।

अन्वयः—अतिपूरैः विलुलितम् आनन्दशोकप्रभवं बाष्पम् अवसृजन्ती तृष्णया उत्तानदीर्घा धवलबहलमुग्धा दुग्धकुल्येव ते दृष्टिः स्नेहनिष्यन्दिनी हृदयेशं स्नपयति ।

व्याख्या—अतिपूरैः = महद्भिः प्रवाहैः, विलुलितम् = विकीर्णम्, आनन्दशोकप्रभवम् = हर्षदुःखोद्भूतम्, बाष्पम् = अश्रु, अवसृजन्ती = पातयन्ती, तृष्णया = दर्शनोत्कण्ठया, उत्तानदीर्घा = विस्फारितदूरविलम्बिता, धवलबहलमुग्धा = शुभ्रातिशयमनोहारिणी, दुग्धकुल्येव = दुग्धपूर्णा अल्पा कृत्रिमसरिद् इव, ते = तव, दृष्टिः = लोचनम्, स्नेहनिष्यन्दिनी = अनुरागवर्षिणी, हृदयेशम् = प्राणनाथम्, स्नपयति = अभिषिञ्चति । उपमोत्प्रेक्षाऽलङ्कारयोः संसृष्टिरत्र । मालिनी नाम वृत्तम् ।

( ८५ ) ददतु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्चुतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ ३।२४ ॥

प्रसङ्गः—साम्प्रतं रामचन्द्रस्य स्वागतं विधातुं वासन्ती तत्रत्यान् पादपादीन् चारुतया सम्प्रेरयत्यत्र ।

अन्वयः—मधुश्चुतः तरवः पुष्पैः फलैश्च अर्घ्यं ददतु, स्फुटितकमलामोदप्रायाः वनानिलाः प्रवान्तु, रज्यत्कण्ठाः शकुन्तयः अविरलं कलं क्वणन्तु, अयं देवो रामः स्वयम् इदं वनं पुनः आगतः ।

व्याख्या—मधुश्चुतः = मकरन्दवर्षिणः, तरवः = वृक्षाः, पुष्पैः = प्रसूनैः, फलैश्च = सस्यैश्च, अर्घ्यम् = पूजोपहारम्, ददतु = वितरन्तु, रामायेति शेषः, स्फुटितकमलामोदप्रायाः = विकसितपद्मसौरभसमन्विताः, वनानिलाः = विपिनवाताः, प्रवान्तु = प्रवहन्तु, रज्यत्कण्ठाः = रागयुक्तगलाः, शकुन्तयः = पक्षिणः, अविरलम् = निरन्तरम्, कलम् = मधुरास्फुटम्, क्वणन्तु = कूजन्तु, अयं देवः रामः = एष महाराज रामचन्द्रः, स्वयम् = अनन्यप्रेरितः, इदं वनम् = एतद् विपिनम्, पुनः = भूयः, आगतः = आयातः, अस्तीति शेषः । काव्यलिङ्गालङ्कारोऽत्र, हरिणी नाम वृत्तम् ।

( ८६ ) करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत् ।

**भवति मम विकारस्तेषु दृष्टेषु कोऽपि**
**द्रव इव हृदयस्य प्रस्तरोद्भेदयोग्यः ॥ ३।२५ ॥**

**प्रसङ्गः**—वासन्त्याः कुमारलक्ष्मणकुशलप्रश्नमनाकर्णनमभिनीय रामचन्द्रोऽत्र व्याहरति ।

**अन्वयः**—मैथिली यान् तरुशकुनिकुरङ्गान् करकमलवितीर्णैः अम्बुनीवारशष्पैः अपुष्यत्, तेषु दृष्टेषु प्रस्तरोद्भेदयोग्यः हृदयस्य द्रव इव मम कोऽपि विकारो भवति ।

**व्याख्या**—मैथिली = सीता, यान् = प्रथितान्, तरुशकुनिकुरङ्गान् = वृक्षपक्षिहरिणान्, करकमलवितीर्णैः = पाणिपङ्कजप्रदत्तैः, अम्बुनीवारशष्पैः = जलमृगधान्यकोमलतृणैः, अपुष्यत् = अवर्धयत्, तेषु = पूर्वनिगदितेषु, दृष्टेषु = विलोकितेषु सत्सु, प्रस्तरोद्भेदयोग्यः = पाषाणविदारणसमर्थः, हृदयस्य = चित्तस्य, द्रव = आर्द्रता, इव = यथा, मम = रामस्य, कोऽपि = अनिर्वचनीयः, विकारः = शोकादिजन्यचित्तविकृतिः, भवति = उत्पद्यते । उपमा-यथासंख्यालङ्कारावत्र । मालिनी नाम वृत्तम्, तल्लक्षणं यथा—

'ननमयययुतेयं मालिनी भोगिलोकैः' इति ।

**( ८७ ) त्वं जीवितं त्वमसि मे हृदयं द्वितीयं**
**त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।**
**इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां**
**तामेव शान्तमथ वा किमिहोत्तरेण ॥ ३।२६ ॥**

**प्रसङ्गः**—रामस्य कठोरत्वं प्रतिपादयन्ती वासन्ती अत्र स्वकीयं हृद्गतं भावमुद्गिरति ।

**अन्वयः**—त्वं जीवितं, त्वं मे द्वितीयं हृदयम् असि, त्वं नयनयोः कौमुदी, त्वम् अङ्गे अमृतम् इत्यादिभिः प्रियशतैः मुग्धाम् अनुरुध्य तामेव……अथवा शान्तम्, इह उत्तरेण किम् ?

**व्याख्या**—त्वम् = सीता, जीवितम् = जीवनम्, त्वम् = जानकी, मे = मम रामस्य, द्वितीयम् = अपरम्, हृदयम् = स्वान्तम्, असि = विद्यसे, त्वम् = सीता, नयनयोः = नेत्रयोः, कौमुदी = ज्योत्स्ना, त्वम् = सीता, अङ्गे = गात्रे, अमृतम् = पीयूषम्, तव स्पर्शो मां जीवयतीत्याशयः, इत्यादिभिः = एवंविधैः, प्रियशतैः = प्रियवचनानामनन्तसंख्याभिः, मुग्धाम् = सरलहृदयाम्, अनुरुध्य = वशीकृत्य, तस्याश्चित्तरञ्जनं विधायेत्याशयः, तामेव = तथाविधां सीतामेव………

कपटेन निर्वासितवान् इत्युपालम्भगर्भो वाक्यशेषः; अथवा = इति आक्षेपे, शान्तं यातु तत्, इह = अस्मिन् विषये, उत्तरेण = परवर्तिना वाक्येन, किम् = न कोऽपि प्रयोजनमित्याशयः। रूपकातिशयोक्त्याक्षेपालङ्काराणामङ्गाङ्गिभावेन साङ्कर्यमत्र। वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' इति।

(८८) अयि कठोर यशः किल ते प्रियं
किमयशो ननु घोरमतः परम्।
किमभवद्विपिने हरिणीदृशः
कथय नाथ कथं बत मन्यसे॥ ३।२७॥

प्रसङ्गः—'लोकः सीतायाः मम भवने निवासं न सहते, इत्यस्माद्धेतोः सा निर्वासिते'ति समाकर्ण्य वासन्ती पुनः स्वकीयं विचारमत्र व्याहरति।

अन्वयः—अयि कठोर! ते यशः प्रियं किल, ननु अतः परं घोरम् अयशः किम्, (स्यात्), विपिने हरिणीदृशः किम् अभवत्, हे नाथ! कथय कथं बत मन्यसे।

व्याख्या—अयि कठोर! = भो निष्ठुर! ते = तव, यशः = कीर्तिः, प्रियम् = आदरणीयम्, किल = खलु, ननु = आक्षेपेऽव्ययम्, अतः = अस्मात्, निष्कारणसीतापरित्यागजनितं यदयशः, तस्मादित्याशयः, परम् = अधिकम्, अयशः = अपकीर्तिः, किम्, अस्तीति शेषः, विपिने = वने, हरिणीदृशः = मृगलोचनायाः, किम् अभवत् = किमभूत्, हे नाथ! = भो स्वामिन्! कथय = ब्रूहि, कथम् = किं प्रकारम्, मन्यसे = उत्प्रेक्षसे, बत इति खेदे। यशोऽर्थे चेष्टमानस्यायशः प्राप्तिः समजनीति विषमालङ्कारोऽत्र, हरिण्या इव चञ्चले लोचने यस्या इत्यत्र त्रिपदलुप्तोपमाऽपि। द्रुतविलम्बितं नाम वृत्तम्, तल्लक्षणं यथा—

'द्रुतविलम्बितमाह नभौ भरौ' इति।

(८९) त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता॥ ३।२८॥

प्रसङ्गः—'कथं मन्यसे' इति वासन्त्याः प्रश्नं समाधत्ते रामचन्द्रोऽत्र।

अन्वयः—त्रस्तैकहायनकुरङ्गविलोलदृष्टेः परिस्फुरितगर्भभरालसायाः तस्याः ज्योत्स्नामयीव मृदुबालमृणालकल्पा अङ्गलतिका नियतं क्रव्याद्भिः विलुप्ता।

**व्याख्या**—त्रस्तैकहायनकुरङ्गविलोलदृष्टेः=चकितवर्षमात्रवयस्कमृगेवातिचञ्चलनयनायाः, परिस्फुरितगर्भभरालसायाः=स्पन्दमानगर्भपोतभारमन्थरगमनायाः, तस्याः=सीतायाः, ज्योत्स्नामयीव=ज्योत्स्नाघटितेव, मृदुबालमृणालकल्पा=कोमलनवोद्गतविसदण्डन्यूना, अङ्गलतिका=देहलता, नियतम्=निश्चितम्, क्रव्याद्भिः=आममांसभक्षिकैः, राक्षसादिभिः, विलुप्ता=लोपं प्रापिता, भक्षितेत्याशयः। उपमाऽलङ्कारोऽत्र। वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' इति।

**(९०) पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया।**
**शोकक्षोभे च हृदयं च प्रलापैरेव धार्यते॥ ३।२९॥**

**प्रसङ्गः**—शोकसम्पीडितैः जनैः स्वदुःखस्यापवारणं तु विधातव्यमेव, एतदेव सुस्पष्टीकर्तुं तमसा अत्र व्याहरति।

**अन्वयः**—तटाकस्य पूरोत्पीडे परीवाहः प्रतिक्रिया, शोकक्षोभे च हृदयं प्रलापैः एव धार्यते।

**व्याख्या**—तटाकस्य=सरोवरस्य, पूरोत्पीडे=जलप्रवाहाधिक्ये सति, परीवाहः=प्रणाल्या जलनिःसारणम्, प्रतिक्रिया=प्रतीकारः, तटरक्षणोपाय इत्याशयः, शोकक्षोभे—शोकेन=इष्टनाशजन्यदुःखेन, क्षोभे=विलोडने सति, हृदयम्=चित्तम्, प्रलापैः=परिदेवनैरेव, धार्यते=व्यवस्थाप्यते। दृष्टान्ताऽलङ्कारोऽत्र। अनुष्टुब्वृत्तम्, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम्।
द्विचतुर्थपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः'॥ इति।

**(९१) इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा**
**प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति।**
**स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-**
**स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम्॥ ३।३०॥**

**प्रसङ्गः**—'विशेषतया रामचन्द्रस्य कृते नैकविधकार्यजातैरयं जीवलोको नूनं कष्टप्रायः' इति प्रदर्शयन्ती तमसा अत्र निगदति।

**अन्वयः**—अभियुक्तेन मनसा इदं विश्व विधिवत् पाल्यम्, प्रिया शोकः घर्मः कुसुममिव जीवं ग्लपयति, स्वयं त्यागं कृत्वा विलपनविनोद अपि असुलभः, तत् अद्यापि उच्छ्वासः भवति, ननु रुदितं लाभो हि।

व्याख्या—अभियुक्तेन = अवहितेन, मनसा = चेतसा, इदं विश्वम् = जगत्, विधिवत् = यथाशास्त्रम्, पाल्यम् = पालनीयम्, प्रियाशोकः = सीताविरहदुःखम्, घर्मः = आतपः, कुसुममिव = प्रसूनमिव, जीवम् = प्राणान्, ग्लपयति = शोषयति, स्वयम् = स्वेच्छया, त्यागम् = सीतानिर्वासनम्, कृत्वा = विधाय, विलपनविनोद अपि = शोकापनोदनमपि, असुलभः = दुर्लभः, तत् = तथापि, अद्यापि = अस्मिन् दिवसेऽपि, उच्छ्वासः = प्राणधारणं भवति, ननु = निश्चितम्, रुदितम् = परिदेवनम्, लाभो हि = रामस्य लाभाय एव। उपमा-परिणामावलङ्कारावत्र। शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'। इति।

(९२) दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्॥ ३।३१॥

प्रसङ्गः—मैथिलीवियोगजन्यां शोकवेदनामसहमानो रामचन्द्रोऽत्र स्वकीयां दयनीयां दशां चारुतया वर्णयति।

अन्वयः—गाढोद्वेगं हृदयं दलति, द्विधा तु न भिद्यते, विकलः कायः मोहं वहति, चेतनां न मुञ्चति, अन्तर्दाहः तनूं ज्वलयति, भस्मसात् न करोति, मर्मच्छेदी विधिः प्रहरति, जीवितं न कृन्तति।

व्याख्या—गाढोद्वेगम् = प्रबलशोकसमन्वितम्, हृदयम् = चित्तम्, दलति = स्फुटति, द्विधा तु = परं द्वयोः खण्डयोः, न = नहि, भिद्यते = विभक्तं भवति, विकलः = शोकविह्वलः, कायः = देहः, मोहम् = मूर्च्छाम्, वहति = धारयति, चेतनाम् = संज्ञाम्, न = नैव, मुञ्चति = जहाति, अन्तर्दाहः = हृदयसन्तापः, तनूम् = शरीरम्, ज्वलयति = प्रदीपयति, भस्मसात् न करोति = कात्स्न्र्येन भस्मीभावं न प्रापयति, मर्मच्छेदी = मर्मस्थानविदारी, विधिः = विधाता, प्रहरति = आहन्ति, जीवितम् = प्राणान्, न = नैव, कृन्तति = छिनत्ति, न मारयतीत्याशयः। दलनादिकारणे विद्यमानेऽपि कार्याभावाद् विशेषोक्तिरलङ्कारोऽत्र, हरिणी नाम वृत्तम्।

(९३) न किल भवतां देव्याः स्थानं गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता।
चिरपरिचितास्ते ते भावाः परिद्रवयन्ति मा-
मिदमशरणैरद्यास्माभिः प्रसीदत रुद्यते॥ ३।३२॥

**प्रसङ्गः**—जीवनमरणयोर्दोलायामारूढो रामचन्द्रः सम्प्रति नागरिकानुद्दिश्य 'पूर्वं मैथिलीं परित्यज्येदानीं किमिति रुद्यते ?' इत्याशङ्काया उत्तरं ददानोऽत्र स्वकीयं विचारमभिव्यनक्ति ।

**अन्वय.**—देव्याः गृहे स्थानं भवतां न अभिमतं किल, ततः शून्ये वने तृणमिव त्यक्ता, न चापि अनुशोचिता, चिरपरिचिताः ते ते भावाः मां परिद्रवयन्ति, ( अतः ) अशरणैः अस्माभिः इदं रुद्यते, प्रसीदत ।

**व्याख्या**—देव्याः = सीतायाः, गृहे = मदीये राजभवने, स्थानम् = वासः, भवताम् = भवद्भिः प्रजाजनैः, न अभिमतम्=नानुमोदितम्, किल=निश्चयेन, इति श्रुतं मया, ततः = तस्मात्, शून्ये = विजने, वने = विपिने, तृणमिव = तुच्छघासादिवत्, त्यक्ता = विसृष्टा, न च = नैव, अनुशोचिता=अनुतापेन सम्भाविता, चिरपरिचिताः = सीतया सह सुचिरमनुभूताः, ते ते = सर्वे ते पूर्वानुभूताः, भावाः = पदार्थाः, तरुशकुनिकुरङ्गादयः गिरिकाननादयश्चाद्य पुनर्दृष्टाः सन्तः, माम् = रामचन्द्रम्, परिद्रवयन्ति = परितः द्रवीभूतं कुर्वन्ति, आर्द्रीकुर्वन्तीत्याशयः, ( अतः ) अशरणैः = निरुपायैः, अस्माभिः, अद्य = अस्मिन् दिने, इदं रुद्यते = श्रूयमाणं रोदनकर्म विधीयते, प्रसीदत = यूयं प्रसन्नाः भवत, यतो हि भवतामभीप्सितं जातमित्याशयः । विशेषोक्तिरलङ्कारोऽत्र, हरिणी नाम वृत्तम् ।

**( ९४ ) यथा तिरश्चीनमलातशल्यं प्रत्युप्तमन्तः सविषश्च दंशः ।**
**तथैव तीव्रो हृदि शोकशङ्कुर्मर्माणि कृन्तन्नपि किं न सोढः ॥३।३५॥**

**प्रसङ्गः**—सीतावियोगजदुःखेन भृशं सन्तप्तो रामचन्द्रोऽत्र स्वकीयं धैर्यं सन्दर्शयन् वासन्तीं प्रति निगदति ।

**अन्वयः**—अन्तः प्रत्युप्तं तिरश्चीनम् अलातशल्यं सविषः दंशः च यथा, तथैव तीव्रः हृदि शोकशङ्कुः मर्माणि कृन्तन् अपि किं न सोढः ।

**व्याख्या**—अन्तः = हृदये, प्रत्युप्तम् = निखातम्, तिरश्चीनम् = तिर्यग्भूतम्, अलातशल्म् = अङ्गारमयं लोहकीलकम्, सविषः = विषयुक्तः, दंशः = दन्तप्रवेशश्च, यथा = येन प्रकारेण, तीव्र इति शेषः, तथैव = तेनैव प्रकारेण, तीव्रः = तीक्ष्णः, नितरां दुःसह इत्याशयः, हृदि = हृदये, प्रत्युप्तमिति शेषः, शोकशङ्कुः = शोकरूपकीलकम्, मर्माणि = जीवनस्थानानि, कृन्तन्नपि = छिन्दन्नपि, किं न सोढ = न व्यसह्यत् किम् ? अपि तु सोढ एवेत्याशयः, मयेति पूर्वेण सम्बन्धः । उपमारूपकश्चालङ्कारावत्र, उपजाति नाम वृत्तम् ।

( ९५ ) लोलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्नः कथमपि मयाऽऽधीयते तं तमन्तः ।
भित्त्वा भित्त्वा प्रसरति बलात्कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥ ३।३६ ॥

प्रसङ्गः—'एवमतिनिष्कम्पस्तम्भितान्तःकरणस्यापि मम संस्तुततत्तत्प्रियवस्तुदर्शनादुद्दामोऽयमावेगः' इति प्रोच्य रामचन्द्रोऽत्र स्वस्य शोकस्य दुःसहत्वं वर्णयति ।

अन्वयः—लोलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं मया यो यो यत्नः कथमपि आधीयते तं तं कोऽपि चेतोविकारः तोयस्य अप्रतिहतरयः ओघः सैकतं सेतुम् इव अन्तः बलात् भित्त्वा-भित्त्वा प्रसरति ।

व्याख्या—लोलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थम् = चञ्चलमहोर्मिक्षोभाधिगतशोकनिरोधार्थम्, मया = रामेण, यो यो यत्नः = यो यो प्रयासः, कथमपि = महता कृच्छ्रेण, आधीयते = विधीयते, तं तम् = यत्नविशेषः, कोऽपि = अनिर्वचनीयः, चेतोविकारः = हृदयस्यावेगः, तोयस्य = जलस्य, अप्रतिहतरयः = अभिवारितवेगः, ओघः = दीर्घप्रवाहः, सैकतम् = सिकतामयम्, सेतुम्, इव = यथा, अन्तः = मध्ये, आधानसाम्यनयोरन्तराल इत्याशयः, बलात् = प्रसह्य, भित्त्वा-भित्त्वा = पुनः-पुनः भित्त्वा, प्रसरति = प्रवर्तते । उपमाऽलङ्कारोऽत्र, मन्दाक्रान्ता नाम वृत्तम् ।

( ९६ ) अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद् गोदावरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥ ३।३७ ॥

प्रसङ्गः—भगवतः रामचन्द्रस्यादेशं नीत्वा वासन्ती रामेण साकं स्थानान्तरं यात्वा किमपि विशिष्टं स्थानं सकरुणं सङ्केतयति ।

अन्वयः—अस्मिन् एव लतागृहे त्वं तन्मार्गदत्तेक्षणः अभवः, सा गोदावरीसैकते हंसैः कृतकौतुका चिरम् अभूत्, आयान्त्या तया त्वां परिदुर्मनायितमिव वीक्ष्य कातर्यात् अरविन्दकुड्मलनिभः मुग्धः प्रणामाञ्जलिः बद्धः ।

व्याख्या—अस्मिन् एव = पुरोवर्तिन्येव, लतागृहे = निकुञ्जे, त्वम् = रामः, तन्मार्गदत्तेक्षणः = सीतापथविलोकनोत्कः, अभवः = आसीः, सा = सीता, गोदा-

वरीसैकते = गोदावर्याः पुलिने, हंसैः = मरालैः, कृतकौतुका = जनितदर्शनाभि-लाषयुता, चिरम् = दीर्घकालम्, अभूत् = स्थिता, आयान्त्या = गोदावर्याः लता-भवनं प्रतिनिवर्तमानया, तया=सीतया, त्वाम्=भवन्तं रामचन्द्रम्, परिदुर्मनायित-मिव = परिकुपितचेतसमिव स्थितम्, वीक्ष्य = विलोक्य, कातर्यात् = स्वापराध-प्रतिसन्धानजनितत्रासात्, अरविन्दकुड्मलनिभः = कमलकोरकसदृशः, मुग्धः = मनोहरः, प्रणामाञ्जलिः = प्रणामसूचकः करपुटः, बद्धः = रचितः, सा भवन्तं प्रसादयितुं युक्तपाणिरभूदित्याशयः। उपमोत्प्रेक्षाऽलङ्कारावत्र। शार्दूलविक्रीडितं नाम वृत्तम्।

( ९७ ) हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ३।३८ ॥

**प्रसङ्गः**—वासन्त्या सन्दर्शितं विशिष्टं स्थानं विलोक्य रामचन्द्रोऽत्र खेदाति-शयमनुभवन् सीतासंस्मरणपूर्वकं व्याहरति।

**अन्वयः**—हा हा देवि ! हृदयं स्फुटति, देहबन्धः ध्वंसते, जगत् शून्यं मन्ये, अविरतज्वालम् अन्तः ज्वलामि, सीदन् विधुरः अन्तरात्मा अन्धे तमसि मज्जति इव, मोहः विष्वक् स्थगयति, मन्दभाग्यः ( अहं ) कथं करोमि।

**व्याख्या**—हा ! हा ! = इति खेदसूचकमव्ययम्, देवि ! = भो सीते ! हृदयम् = उरःस्थलम्, स्फुटति = विदीर्यति, देहबन्धः = शरीरावयवसन्धिः, ध्वंसते = विशीर्णो भवति, जगत् = विश्वम्, शून्यम् = असत्कल्पम्, मन्ये = जानामि, अवि-रतज्वालम्—अविरता = अविश्रान्ताः, ज्वालाः = अग्निशिखाः, यस्मिन् कर्मणि तद् यथा स्यात्तथा, अन्तः = हृदये, ज्वलामि = सन्तापमनुभवामि, सीदन् = अवसन्नः सन्, विधुरः = विकलः, अन्तरात्मा = अन्तःकरणम्, अन्धे तमसि = गाढान्धकारे, मज्जति इव = निलीयते इव, मोहः = मूर्च्छा, विष्वक् = समन्तात्, स्थगयति = आवृणोति, मामिति शेषः, मन्दभाग्यः = दुर्भाग्यः, ( अहं ) कथम् = किम्, करोमि = विदधामि। उत्प्रेक्षाऽलङ्कारोऽत्र, मन्दाक्रान्ता नाम वृत्तम्।

( ९८ ) आलिम्पन्नमृतमयैरिव प्रलेपै-
रन्तर्वा बहिरपि वा शरीरधातून्।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
दानन्दादपरविधं तनोति मोहम् ॥ ३।३९ ॥

**प्रसङ्गः**—मैथिल्याः पाणिपङ्कजसंस्पर्शात् प्रत्यापन्नचेतनो रामचन्द्रः सातिशयमानन्दमनुभवन्नत्र व्याहरति।

**अन्वयः**—अन्तर्वा बहिरपि वा शरीरधातून् अमृतमयैः प्रलेपैः आलिम्पन्निव संस्पर्शः पुनरपि जीवयन् अकस्मात् आनन्दात् अपरविधं मोहं तनोति।

**व्याख्या**—अन्तर्वा = अभ्यन्तरस्थितान्, बहिरपि वा = बहिस्थितांश्च, शरीरधातून् = वपुधारकान् त्वग्रक्तमांसास्थ्यादीन्, अमृतमयैः = सुधात्मकैः, प्रलेपैः = लेपनद्रव्यैः, आलिम्पन् इव = लिप्तान् कुर्वन्निव, संस्पर्शः = अनुभूयमानो मधुरः स्पर्शः, पुनरपि = भूयोऽपि, जीवयन् = प्रत्यागतजीवितं विदधन्, अकस्मात् = सहसा, आनन्दात् = आह्लादवशात्, अपरविधम् = दुःखजन्यपूर्वमोहातिरिक्तम्, सुखजन्यमित्याशयः, मोहम् = मूर्च्छाम्, जड़तां वा, तनोति = विस्तारयति। उत्प्रेक्षाऽलङ्कारोऽत्र, प्रहर्षिणी नाम वृत्तम्।

**( ९९ ) सस्वेदरोमाञ्चितकम्पिताङ्गी जाता प्रियस्पर्शसुखेन वत्सा।**
**मरुन्नवाम्भःप्रविधूतसिक्ता कदम्बयष्टिः स्फुटकोरकेव ॥ ३।४२ ॥**

**प्रसङ्गः**—जानक्यास्तथाविधां शृङ्गाररसपरिप्लुतामवस्थां वीक्ष्य तमसा अत्र 'सीतायाः कीदृशी दशा ?' इत्यस्य वर्णनं विदधाति।

**अन्वयः**—वत्सा प्रियस्पर्शसुखेन मरुन्नवाम्भःप्रविधूतसिक्ता स्फुटकोरका कदम्बयष्टिः इव सस्वेदरोमाञ्चितकम्पिताङ्गी जाता।

**व्याख्या**—वत्सा = पुत्री सीता, प्रियस्पर्शसुखेन = पत्युरामर्शमानन्देन, मरुन्नवाम्भःप्रविधूतसिक्ता = पवनप्रत्यग्रोदकप्रकम्पितार्द्रीकृता, स्फुटकोरका = विकसितकलिकाः, कदम्बयष्टिः = कदम्बवृक्षशाखेव, इव = यथा, सस्वेदरोमाञ्चितकम्पिताङ्गी = घर्मयुक्तपुलकितकम्पितगात्री, जाता = संवृत्ता। उपमाऽलङ्कारोऽत्र, उपजाति नाम वृत्तम्।

**( १०० ) पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथ-**
**स्ते चैते पुरतः पिशाचवदना कङ्कालशेषाः खराः।**
**खड्गच्छिन्नजटायुपक्षतिरितः सीतां चलन्तीं वह-**
**न्नन्तर्व्याकुलविद्युदम्बुद इव द्यामभ्युदस्यादरिः ॥ ३।४३ ॥**

**प्रसङ्गः**—स्थानान्तर सन्दर्शयन्ती वासन्ती अत्र रामचन्द्रं प्रति व्याहरति।

**अन्वयः**—अयं जटायुषा विघटितः पौलस्त्यस्य कार्ष्णायसः रथः, पुरतः च ते एते पिशाचवदना कङ्कालशेषाः खराः, इतः खड्गच्छिन्नजटायुपक्षतिः अरिः चलन्तीं सीतां वहन् अन्तर्व्याकुलविद्युत् अम्बुद इव द्याम् अभ्युदस्थात्।

**व्याख्या**—अयम् = दृश्यमानः, जटायुषा = जटायुर्नामकगृध्रराजेन, विघटितः = भग्नः, पौलस्त्यस्य = पुलस्त्यपौत्रस्य, रावणस्येति भावः, कार्ष्णायसः = कृष्णलौहनिर्मितः, रथः = स्यन्दनः, पुरतः च = अग्रे च, ते = प्रथिता, एते = इमे, पिशाचवदना = पिशाचनिभमुखाः, कङ्कालशेषाः = अस्थिपञ्जरावशिष्टाः, खराः = अश्वतराः, रावणरथवाहकाः वर्तन्त इति शेषः, इतः = अस्मात् स्थानात्, खड्गच्छिन्नजटायुपक्षतिः = असिनिकृत्तजटायुपक्षमूलः, अरिः = शत्रुः, रावण इत्याशयः, चलन्तीम् = अस्थिराम्, मुक्तये प्रयतमानामिति भावः, सीताम् = मैथिलीम्, वहन् = रथनाशात् हस्ताभ्यामेव सन्धारयन्, अन्तर्व्याकुलविद्युत् = अभ्यन्तरचञ्चलतडित्, अम्बुद = मेघः, इव = यथा, द्याम् = आकाशम्, अभि = अभिलक्ष्य, उदस्थात् = उत्पपात । उपमाऽलङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तम् ।

( १०१ ) उपायानां भावादविरतविनोदव्यतिकरै-
विमर्दैर्वीराणां जगति जनितात्यद्भुतरसः ।
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभूत्
कथं तूष्णीं सह्यो निरवधिरयं त्वप्रतिविधः ॥ ३।४४ ॥

**प्रसङ्गः**—दशाननेनापहृतायाः मैथिल्याः वियोगः सावधिः साम्प्रतिकोऽयं वियोगो निरवधिरिति सन्तापमनुभवन् रामचन्द्रोऽत्र व्याहरति ।

**अन्वयः**—उपायानां भावात् अविरतविनोदव्यतिकरैः वीराणां विमर्दैः जगति जनितात्यद्भुतरसः मुग्धाक्ष्याः स वियोगः रिपुघातावधिः अभूत्, तु निरवधिः अप्रतिविधः अयं कथं तूष्णीं सह्यः ।

**व्याख्या**—उपायानाम् = सेनादिसाधनानाम्, भावात् = सत्वात्, अविरतविनोदव्यतिकरैः—अविरतः = अविच्छिन्नः, विनोदानाम् = दुःखविस्मरणहेतूनाम्, व्यतिकरः = सम्पर्कः येषु तैः, वीराणाम् = शूराणाम्, कपिराक्षसादीनाम्, विमर्दैः = सम्प्रहारैः, सङ्ग्रामैरित्याशयः, जगति = लोके, जनितात्यद्भुतरसः—जनितः = उत्पादितः, अत्यद्भुतरसः = अतिशयः विस्मयः, येन एवंविधः, मुग्धाक्ष्याः = मनोहरनेत्रायाः सीतायाः, सः = वनवासकालीनः, वियोगः = विरहः, रावणकृतापहरणजनितः, रिपुघातावधिः—रिपूणाम् = शत्रूणाम्, घातः = नाशः एव, अवधिः = अन्तः, यस्य तथाभूतः, अभूत् = आसीत्, तु = परम्, निरवधिः = अन्तरहितः, अपि च, अप्रतिविधः = प्रतीकारशून्यः, अयम् = सीतायाः वर्तमानवियोगः, कथम् = केन प्रकारेण, तूष्णीम् = जोषम्, सह्यः = सहनीयः, न कथमपि सोढुं शक्यत इत्याशयः । व्यतिरेक-काव्यलिङ्गालङ्कारयोः साङ्कर्यमत्र । शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' । इति ।

( १०२ ) व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा
प्रज्ञा जाम्बवतोऽपि यत्र न गतिः पुत्रस्य वायोरपि ।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि मे ॥ ३।४५ ॥

**प्रसङ्गः**—सीतायाः संस्थितिसूचनामनवाप्य रामचन्द्रोऽत्र पुनः जानकीमभिलक्ष्य व्याहरति ।

**अन्वयः**—यत्र मे कपीन्द्रसख्यमपि व्यर्थम्, यत्र हरीणां वीर्यं वृथा, यत्र जाम्बवतोऽपि प्रज्ञा वृथा, यत्र वायोः पुत्रस्य अपि गतिः न, यत्र विश्वकर्मतनयः नलोऽपि मार्गं कर्तुं न क्षमः, सौमित्रेः अपि पत्रिणाम् अविषये तत्र, मे प्रिये क्व असि ?

**व्याख्या**—यत्र = यस्मिन् स्थाने, मे = मम रामस्य, कपीन्द्रसख्यमपि = वानरपतिमैत्र्यमपि, व्यर्थम् = निष्फलम्, यत्र = प्रदेशे, हरीणाम् = वानराणाम्, वीर्यम् = पराक्रमः, वृथा = वैयर्थ्यमापन्नः, यत्र = यस्मिन् प्रदेशे, जाम्बवतः = जाम्बवान्नाम्नो भल्लूकपतेः अपि, प्रज्ञा = बुद्धिः, वृथा = निष्फलता गता, यत्र = यस्मिन् स्थाने, वायोः पुत्रस्य अपि = हनूमतः अपि, गतिः न = गमनं नास्ति, यत्र विश्वकर्मतनयः = एतन्नाम्नो देवशिल्पिनः पुत्रः, नलोऽपि = नलनामकः वानरश्रेष्ठोऽपि, मार्गम् = पन्थानम्, कर्तुम् = निर्मातुम्, न = नैव, क्षमः = समर्थः, सौमित्रः अपि = लक्ष्मणस्यापि, पत्रिणाम् = बाणानाम्, अविषये = अगोचरे, तत्र = तथाविधे, मे = मम, प्रिये = वल्लभे, क्व = कस्मिन् प्रदेशे, असि ? = वर्तसे ? त्वमिति शेषः । व्यतिरेकालङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तम् ।

( १०३ ) एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक्पृथगिवाश्रयते विवर्तान् ।
आवर्तबुद्बुदतरङ्गमयान्विकारा-
नम्भो यथा सलिलमेव तु तत्समग्रम् ॥ ३।४७ ॥

**प्रसङ्गः**—'अहो ! कीदृशं संविधानकं समजनि ? अपूर्वोऽयं समयघटनाचक्रव्यतिकरः ?' इति प्रोच्य तमसा करुणारसस्य सातिशयं महत्त्वमत्र प्रतिपादयति ।

**अन्वयः**—एकः एव करुणः रसः निमित्तभेदात् भिन्नः सन् पृथक्-पृथक् विवर्तान् आश्रयते, यथा अम्भः आवर्तबुद्बुदतरङ्गमयान् विकारान् ( आश्रयते ), परन्तु तत् समग्रं सलिलम् एव ।

**व्याख्या**—एक एव=अभिन्न एव, करुणः रसः=करुणाख्यो रसः, यद्वा लक्षणया शोकरूपो भावः, निमित्तभेदात्=विभावादिकारणपार्थक्यात्, भिन्नः= अनेकत्वेन प्रतीयमानः सन्, पृथक्-पृथक् इव=नानाविधानिव, विवर्तान्= विलक्षणपरिणामान्, आश्रयते=अवलम्बते, यथा=येन प्रकारेण, अम्भः=जलम्, वायुक्षोभादिनिमित्तवशात्, आवर्तबुद्बुदतरङ्गमयान्—आवर्तः=जलभ्रमः, बुद्बुदः=कुड्मलाकारजलसंस्थानविशेषः, तरङ्गः=ऊर्मिः, ते आवर्तबुद्बुदतरङ्गाः, तन्मयान्=तद्रूपान्, विकारान्=रूपभेदान्, आश्रयत इति शेषः, तु=परन्तु, तत् समग्रम्=सर्वमावर्तादिकम्, सलिलम् एव=जलमेव। उपमाऽलङ्कारोऽत्र। वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' इति।

**( १०४ ) अवनिरमरसिन्धुः सार्धमस्मद्विधाभिः**
**स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता।**
**स च मुनिरनुयातारुन्धतीको वसिष्ठ-**
**स्त्वयि वितरतु भद्रं भूयसे मङ्गलाय॥ ३।४८॥**

**प्रसङ्गः**—सकलस्यापि तृतीयाङ्कस्य करुणरसमयसत्वात् प्रेक्षकाणां मनोरञ्जनार्थं सीता-रामयोः शीघ्रमेव समागमो भविष्यतीति सूचनार्थं तमसा-वासन्त्योः मुखेन युगपदन्ते शुभाशीर्वादात्मकं पद्यरत्नमवतारयति कविः।

**अन्वयः**—अस्मद्विधाभिः सार्धम् अवनिः अमरसिन्धुः स च कुलपतिः यः छन्दसाम् आद्यः प्रयोक्ता, स च अनुयातारुन्धतीकः वसिष्ठो मुनिः भूयसे मङ्गलाय त्वयि भद्रं वितरतु।

**व्याख्या**—अस्मद्विधाभिः=मादृशीभिः, सार्धम्=साकम्, अवनिः=पृथिवी, अमरसिन्धुः—अमराणाम्=देवानाम्, सिन्धुः=नदी, गङ्गा इत्याशयः, स च= प्रथितः, कुलपतिः=मुनीनां दशसाहस्रस्य अध्यापयिता पालयिता च मुनिः वाल्मीकिः, यः=वाल्मीकिः, छन्दसाम्=वेदप्रयुक्त छन्दोभ्यः भिन्नानां छन्दसाम्, आद्यः=प्रथमः, प्रयोक्ता=व्यवहर्ता, अवतारयितेत्याशयः, स च=प्रसिद्धः, अनुयातारुन्धतीकः—अनुयाता=अनुगता, अरुधन्ती यं सः, वसिष्ठः मुनिः= रघुवंशीयानां कुलगुरुः, भूयसे=महते, मङ्गलाय=शुभाय, त्वयि=सीतायाम्, रामे च, भद्रम्=कल्याणम्, वितरतु=प्रयच्छतु। तुल्ययोगिताऽलङ्कारोऽत्र। मालिनी नाम वृत्तम्, तल्लक्षणं यथा—

'ननमयययुतेयं मालिनी भोगिलोकैः'। इति।

## चतुर्थोऽङ्कः

( १०५ ) निवारौदनमण्डमुष्णमधुरं सद्यः प्रसूतप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ ४।१ ॥

**प्रसङ्गः**—चतुर्थाङ्कस्यादौ द्वयोर्तापसयोर्मध्ये एको दाण्डायनः प्रविश्य 'महर्षेः वाल्मीकेराश्रमे मान्यानामतिथिजनानां स्वागतार्थं नैकविधं कार्यं विधीयते, तेनाद्य विशिष्टा शोभा प्रेक्षणीया जाते'ति प्रोच्यात्र आश्रमसौष्ठवं वर्णयति ।

**अन्वयः**—तपोवनमृगः सद्यःप्रसूतापीताद् अभ्यधिकम् उष्णमधुरं नीवारौदन-मण्डं पर्याप्तम् आचामति, सर्पिष्मतः भक्तस्य स्फुरता गन्धेन मनाक् अनुसृतः कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ।

**व्याख्या**—तपोवनमृगः = आश्रममृगः, सद्यःप्रसूतापीताद् = मृगीनिपीताद्, अभ्यधिकम्=अवशिष्टम्, उष्णमधुरम्=उष्णं च तत् मधुरम्, नीवारौदनमण्डम्= तृणधान्यभक्तनिस्रावम्, पर्याप्तम् = यथेष्टम्, आचामति = पिबति, सर्पिष्मतः= घृतसाधितस्य, भक्तस्य = अन्नस्य, स्फुरता = स्फुटीभवता, गन्धेन = सौरभ्येण, मनाक् = ईषत्, यथा तथा, अनुसृतः = अनुगतः, कर्कन्धूफलमिश्रशाकपचना-मोदः = बदरीफलयुक्तपच्यमानशाकपरिमलः, परिस्तीर्यते = सर्वतः विसारितो भवति । स्वभावोक्तिरलङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तम् ।

( १०६ ) अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥ ४।३ ॥

**प्रसङ्गः**—राजा जनकोऽत्र प्रविश्य सीताशोकसन्तापमभिनयति ।

**अन्वयः**—अपत्ये यत् तादृक् दुरितम् अभवत्, महता तीव्रेण व्रणितहृदयेन व्यथयता तेन ( दुरितेन ) विषक्तः पटुः धारावाही चिरेणापि नव इव, क्रकच इव मर्माणि निकृन्तन् मे मन्युः न विरमति ।

**व्याख्या**—अपत्ये = सन्ततौ, सीतायामित्याशयः, यत् तादृक् = तथाविधम्, अचिन्त्यमिति भावः, दुरितम् = व्यसनम्, अभवत् = अभूत्, महता = विपुलेन, तीव्रेण = दारुणेन, व्रणितहृदयेन—व्रणितम्=सञ्जातव्रणम्, हृदयम्, येन तेन, व्यथ-

यता = पीडयता, तेन = दुरितेन, विषक्तः=संसक्तः, पटुः = कुशलः, तापसस्यापि मम हृदयोन्मथने समर्थं इत्याशयः, धारावाही = सततस्थायी, चिरेणापि = महता कालेनातीतेनापि, नव इव=अचिरजात इव, ( किञ्च ) क्रकच इव = करपत्रमिव, मर्माणि = जीवस्थानानि, निकृन्तन् = छिन्दन्, मे = मम, मन्युः = शोकः, कोपो वा, न विरमति = नोपशाम्यति । उपमोत्प्रेक्षाऽलङ्कारावत्र । शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' । इति ।

( १०७ ) अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि स्खलदसमञ्जसमञ्जु जल्पितं ते ॥४।४॥

**प्रसङ्गः**—महीपतिः जनकोऽत्र सीतायाः शैशवं संस्मरन् स्वकीयं भावं व्याहरति ।

**अन्वयः**—शिशोः ते अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुड्मलाग्रं स्खलदसमञ्जसमञ्जुजल्पितं वदनकमलकं स्मरामि ।

**व्याख्या**—शिशोः = शैशवे संस्थितायाः, ते = तव सीतायाः, अनियतरुदितस्मितम्—अनियतम् = अव्यवस्थितम्, रुदितम् = रोदनम्, स्मितम् = मृदुहसितम्, च यस्मिन् तत्तथोक्तम्, विराजत्कतिपयकोमलदन्तकुड्मलाग्रम्—विराजन्ति = शोभमानानि, कतिपयानि = कियन्ति, कोमलानि = सुकुमाराणि, दन्तकुड्मलानाम् = दशनमुकुलानाम्, अग्राणि = पुरोभागाः, यस्मिन् तत्तथोक्तम्, स्खलदसमञ्जसमञ्जुजल्पितम्=अस्पष्टोच्चरितसम्बद्धमनोहरभाषितम्, वदनकमलकम् = कमलवत् सुन्दरं मुखम्, स्मरामि = उत्कण्ठापूर्वकं चिन्तयामि । उपमा-स्वभावोक्तिरलङ्कारयोः साङ्कर्यमत्र । पुष्पिताग्रा नाम वृत्तम्, तल्लक्षणं यथा—

'अयुजि नयुगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा' । इति ।

( १०८ ) त्वं वह्निर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव यामसूत भवती तद्वत्तु या दैवतं
तस्यास्त्वदुहितुस्तथा विशसनं किं दारुणेऽमृष्यथाः ॥ ४।५ ॥

**प्रसङ्गः**—सीतानिर्वासनेन भृशं शोकसन्तप्तो महीपतिः जनको धरित्रीं सम्बोध्यात्र स्वकीयं विचारं व्याहरति ।

**अन्वयः**—यस्याः माहात्म्यं त्वं ( वेद ), वह्निः मुनयः वसिष्ठगृहिणी गङ्गा

च विदुः, यदि वा रघोः कुलगुरुः देवः भास्करः स्वयं ( वेद ), विद्यां वागिव यां भवती असूत, या तद्वत् तु दैवतम्, तस्याः त्वद्दुहितुः तथा विशसनं दारुणे किम् अमृष्यथाः ?

**व्याख्या**—यस्याः =सीतायाः, माहात्म्यम् =महिमानम्, चरित्रोत्कर्षमित्याशयः, त्वम्=वसुन्धरा, वेत्सीति शेषः, वह्निः =अग्निः, मुनयः =वसिष्ठवाल्मीकिप्रभृतयः, वसिष्ठगृहिणी=अरुन्धती, गङ्गा=भागीरथी च, विदुः =जानन्ति, यदि वा =किञ्च, रघोः = रघुकुलस्य, कुलगुरुः =आदिपुरुषः, देवः = दीप्तशीलः, भास्करः=सूर्यः, स्वयम्=साक्षात्, वेदेति शेषः, विद्याम्=ज्ञानम्, वाक् = भारती, इव =यथा, याम् =सीताम्, भवती =पूज्या, असूत =सूतवती, या =सीता, तद्वत् =तानि दैवतानि, तु =एव, दैवतम् =देवता, अस्तीति शेषः, तस्याः = प्रथितायाः, त्वद्दुहितुः =तव कन्यायाः, तथा =तेन प्रकारेण, सापवादनिर्वासनेनेत्याशयः, विशसनम् =हिंसनम्, दारुणे =भो कठोरे ! त्वं किम् = कथम्, अमृष्यथाः =सोढवती । उपमाऽलङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तम् ।

**( १०९ ) आसीदियं दशरथस्य गृहे यथा श्रीः**
**श्रीरेव वा किमुपमानपदेन सैषा ।**
**कष्टं बतान्यदिव दैववशेन जाता**
**दुःखात्मकं किमपि भूतमहो विपाकः ॥ ४।६ ॥**

**प्रसङ्गः**—नेपथ्ये गृष्टिनाम्ना कञ्चुकिनोपदिश्यमानमार्गामरुन्धतीं, दशरथस्य धर्मपत्नीं कौसल्याञ्च विलोक्य 'कौसल्यैवेयमिति' तस्याः शरीरावस्थाविपर्ययञ्च निरूप्य जनकोऽत्र निगदति ।

**अन्वयः**—इयं दशरथस्य गृहे श्रीः यथा आसीत्, अथवा श्रीः एव उपमानपदेन किं, कष्ट बत सा एषा दैववशेन अन्यत् किमपि दुःखात्मकं भूतं जाता इव अहो विपाकः ।

**व्याख्या**—इयम् =पुरतो दृश्यमाना कौसल्या, दशरथस्य =एतन्नामकस्य नरपतेः, गृहे =भवने, श्रीः =लक्ष्मीः, यथा =येन प्रकारेण, आसीत् =अभूत्, वा =अथवा, श्रीरेव =लक्ष्मीरेव, आसीदिति शेषः, उपमानपदेन =उपमाबोधकपदेन, किम् =न किमपि प्रयोजनम्, कष्टम् =दुःखम्, बत ! =हा ! सा =लक्ष्मीरूपा, एषा =पुरोवर्तमाना कौसल्या, दैववशेन =भाग्यवशेन, प्रतिकूलभाग्येनेत्याशयः, अन्यत् =जगद्विलक्षणम्, किमपि =अनिर्वाच्यम्, दुःखात्मकम् =दुःखस्वरूपम्, भूतम् =प्राणिविशेषः, जाता इव =संवृत्ता इव, अहो ! =आश्चर्ये,

विपाकः=विरुद्धपरिणामः, दशाविपर्यास इत्याशयः। रूपकोपमोत्प्रेक्षाऽलङ्काराणां संसृष्टिरत्र। वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' इति।

(११०) य एव मे जनः पूर्वमासीन्मूर्तो महोत्सवः।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम्॥ ४१७॥

**प्रसङ्गः**—कौसल्यायाः दयनीयां दशामवलोक्य महीपतिः जनकोऽत्र स्वकीयं विचारं व्याहरति।

**अन्वयः**—यः एव जनः पूर्वं मे मूर्तिमान् महोत्सवः आसीत्, तस्य एव दर्शनं क्षते क्षारमिव असह्यं जातम्।

**व्याख्या**—य एव जनः=कौसल्या, पूर्वम्=सीतानिर्वासनात्प्राक्, मे=मम जनकस्य, मूर्तिमान्=शरीरी, महोत्सवः=निर्भरानन्दसन्दोहः, आसीत्=अभवत्, तस्य एव=कौसल्याया एव, दर्शनम्=साक्षात्कारः, क्षते=शस्त्रादिभिः निर्भिन्ने अङ्गे, व्रणे वा, क्षारमिव=लवणमिव, असह्यम्=सोढुमशक्यम्, जातम्=संवृत्तम्। कौसल्यायां महोत्सवस्यारोपात् रूपकम्, 'क्षते क्षारमिव' इत्यत्रोपमा, इत्थमनयोः संसृष्टिः। अनुष्टुब्वृत्तमत्र, तल्लक्षणं यथा—

'श्लोके षष्ठं गुरुर्ज्ञेयं सर्वत्र लघुपञ्चमम्।
द्विचतुर्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः'॥ इति।

(१११) सन्तानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि।
दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव सम्प्लवन्ते॥ ४१८॥

**प्रसङ्गः**—भगवत्यरुन्धती 'सीतावियोगविधुरायाः कौसल्यायाः कृते राजर्षेर्जनकस्य दर्शने दुःखातिभारः समुचित एव' इत्येवंरूपेण समर्थयमाना अत्र राममातरं प्रति व्याहरति।

**अन्वयः**—मानुषाणां सद्बन्धुवियोगजानि दुःखानि सन्तानवाहीन्यपि प्रेयसि जने दृष्टे दुःसहानि (सन्ति), स्रोतः सहस्रैः इव सम्प्लवन्ते।

**व्याख्या**—मानुषाणाम्=मनुष्याणाम्, सद्बन्धुवियोगजानि=परमप्रियस्वात्मीयविरहोत्पन्नानि, दुःखानि=कष्टानि, सन्तानवाहीन्यपि=निरन्तरमनुभूयमानान्यपि, प्रेयसि जने=प्रियतरे जने, दृष्टे=अवलोकिते सति, दुःसहानि=दुःखेन सोढुं शक्यानि, सन्तीति शेषः, स्रोतःसहस्रैरिव=असङ्ख्यप्रवाहैरिव, सम्प्लवन्ते=उच्छलन्ति। उत्प्रेक्षाऽलङ्कारोऽत्र। इन्द्रवज्रा नाम वृत्तम्, तल्लक्षणं यथा—

'स्यादिन्द्रवज्रा यदि तौ जगौ गः'। इति।

( ११२ ) यया पूतम्मन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः।
त्रिलोकीमङ्गल्यामवनितललीनेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥ ४।१० ॥

**प्रसङ्गः**—भगवतीमरुन्धतीमुपेत्य सीरध्वजो जनकः श्रद्धया प्रणमत्यत्र।

**अन्वयः**—पवित्रस्य महसः निधिरपि, पूर्वेषां गुरूणां गुरुतमोऽपि ते पतिः यया पूतम्मन्यः खलु, त्रिलोकीमङ्गल्यां जगद्वन्द्यां देवीमुषसमिव ( स्थितां तां ) भगवतीम् अवनितललीनेन शिरसा वन्दे।

**व्याख्या**—पवित्रस्य = विशुद्धस्य, महसः = तेजसः, निधिरपि = आधारोऽपि, पूर्वेषाम् = पुरातनानाम्, गुरूणाम् = पूज्यानाम्, गुरुतमोऽपि = पूज्यतमोऽपि, ते= तव, पतिः = भर्ता, वसिष्ठ इत्याशयः, यया=भवत्या, पूतम्मन्यः खलु = आत्मानं पूतं मन्यत इति निश्चयेन, त्रिलोकीमङ्गल्याम् = त्रिभुवनमङ्गलकारिणीम्, जगद्व-न्द्याम्=सर्वलोकपूज्याम्, देवीमुषसमिव = उषःकालाभिमानिनीं देवतामिव, स्थिता-मिति शेषः, तां भगवतीम् = माहात्म्यसम्पन्नां भवतीम्, अवनितललीनेन =भूतल-निहितेन, शिरसा = मूर्ध्ना, वन्दे=प्रणमामि। 'उषसमिव त्वामि'ति कथनेनोपमा-ऽलङ्कारोऽत्र। शिखरिणी नाम वृत्तम्, तल्लक्षणं यथा—

'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'। इति।

( ११३ ) शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥ ४।११ ॥

**प्रसङ्गः**—मैथिलीं सम्बोधयन्ती भगवत्यरुन्धती जानकीमुद्दिश्य स्वकीयान् विचारानत्राभिव्यनक्ति।

**अन्वयः**—मम शिशुर्वा शिष्या वा यदसि तत् तथा तिष्ठतु, विशुद्धेः उत्कर्षस्तु त्वयि मम भक्तिं द्रढयति, शिशुत्वं स्त्रैणं वा भवतु, ननु जगतां वन्द्यासि, गुणिषु गुणाः पूजास्थानं न च लिङ्गं न च वयः।

**व्याख्या**—मम = अरुन्धत्याः, शिशुर्वा =बालिका वा, शिष्या वा =उप-देश्या वा, असि इति यत् तत् तथा = तेनैव प्रकारेण, तिष्ठतु=आस्तां तावत्

तत् । विशुद्धेः = पवित्रतायाः, उत्कर्षस्तु=अतिरेक एव, त्वयि=सीतायाः विषये, मम = अरुन्धत्याः, भक्तिम् = अनुरागम्, पूज्यताबुद्धिमित्याशयः, द्रढयति = दृढां विदधाति, वर्धयतीति भावः, शिशुत्वम् = शैशवम्, स्त्रैणम् = स्त्रीत्वं वा भवतु, तवेति शेषः, शिशुरपि=नार्यपि, त्वम्=सीता, ननु-असंशयम्, जगताम् = भुवनानाम्, वन्द्यासि = अभिवादनीयाऽसि, गुणिषु = गुणवत्सु, गुणाः = शालीनत्वादिधर्माः, पूजास्थानम् = समादराऽऽस्पदम्, न च लिङ्गम् = स्त्रीत्वपुंस्त्वादिकम्, न च वयः = वृद्धत्वादिकम् । अर्थान्तरन्यासालङ्कारोऽत्र, शिखरिणी नाम वृत्तञ्च ।

**( ११४ ) स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसाः**
**स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम् ।**
**विपाके घोरेऽस्मिन्नथ खलु विमूढा तव सखी**
**पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥ ४।१२ ॥**

**प्रसङ्गः**—संज्ञाविहीनां कौसल्यां वीक्ष्य 'हन्त ! किमेतदि'ति महीपतिः जनकः साश्चर्यं भगवतीमरुन्धतीं पृच्छति, तदन्वरुन्धती राजर्षेर्जनकस्य समाधानं कुरुतेऽत्र ।

**अन्वयः**—सुहृदि त्वयि दृष्टे स राजा, तत् सौख्यं स च शिशुजनः, ते च दिवसाः, तदखिलं स्मृतौ आविर्भूतं, अथ अस्मिन् घोरे विपाके तव सखी विमूढा किल, पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ।

**व्याख्या**—सुहृदि = प्रियबन्धौ, त्वयि = जनके, दृष्टे = अवलोकिते सति, सः = प्रथितः, राजा=दशरथः, तत् = अनिर्वचनीयम्, सौख्यम् = चक्रवर्तिनो दशरथस्य महिषीत्वेनानुभूतानि सुखानि, स च = प्रथितः, शिशुजनः = सीतारामलक्ष्मणादिबालसमुदायः, ते च = उत्सवपूर्णाः, दिवसाः = दिनानि, तदखिलम् = एतत्सर्वमेव, स्मृतौ = बुद्धौ, आविर्भूतम् = उदितम्, अथ = अनन्तरम्, अस्मिन् = अनुभूयमाने, घोरे = दारुणे, विपाके = दशाविपर्यासे, तव = भवतः, सखी = कौसल्या, विमूढा खलु = मूर्च्छिता एव, पुरन्ध्रीणाम् = कुलवधूनाम्, चित्तम् = चेतः, कुसुमसुकुमारम्-प्रसूनकोमलम्, भवति हि-भवत्येव । उपमाऽर्थान्तरन्यासालङ्कारयोः संसृष्टिरत्र, शिखरिणी नाम वृत्तञ्च ।

**( ११५ ) स सम्बन्धी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयं**
**स चानन्दः साक्षादपि च निखिलं जीवितफलम् ।**
**शरीरं जीवो वा यदधिकमतोऽन्यत्प्रियतरं,**
**महाराजः श्रीमान् किमिव मम नासीद् दशरथः ॥ ४।१३ ॥**

**प्रसङ्गः**—मूच्छितां कौसल्यामालोक्य महीपतिः जनकः पश्चात्तापं कुर्वन् राज्ञो दशरथस्य प्रीतिभावमत्र संस्मरति ।

**अन्वयः**—सः श्लाघ्यः सम्बन्धी, असौ प्रियसुहृद्, तच्च हृदयम्, स च साक्षाद् आनन्दः, अपि च निखिलं जीवितफलम्, शरीरं जीवो वा, अतोऽधिकं प्रियतरं यद् अन्यत् ( तदपि मे दशरथः ) श्रीमान् महाराजः दशरथः मम किमिव न आसीत् ।

**व्याख्या**—सः = दशरथः, श्लाघ्यः = प्रशंसनीयः, सम्बन्धी = वैवाहिक-सम्बन्धवान्, असौ = दशरथः, प्रियसुहृद् = प्रेमास्पदं मित्रम्, तच्च हृदयम् = स दशरथो मे हृदयरूपः, सः च = दशरथः, साक्षात् = प्रत्यक्षः, मूर्तिमानित्याशयः, आनन्दः = हर्षः, अपि च = किञ्च, निखिलम् = समग्रम्, जीवितफलम् = जीवन-धारणस्य प्रयोजनभूतम्, शरीरम् = देहभूतः, जीवो वा = आत्मा वा, अतो = अस्मात् शरीरात् जीवाद् वा, अधिकम्, प्रियतरम् = प्रीतिकरम्, यद् अन्यत् = अपरं वस्तु, तदपि स मे दशरथ इति शेषः, श्रीमान् = राजलक्ष्म्याः आश्रयभूतः, महाराजः = राजचक्रवर्ती, दशरथः = एतन्नामकः, मम = जनकस्य, किमिव न आसीत् = सर्वमेव आसीदिति भावः । अतिशयोक्ति-काव्यलिङ्ग-अर्थापत्ति-रूपका-लङ्काराणां सङ्करोऽत्र, शिखरिणी नाम वृत्तञ्च ।

**( ११६ ) यदस्याः पत्युर्वा रहसि परमन्त्रायितमभू-**
**दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।**
**प्रसादे कोपे वा तदनु मदधीनो विधिरभू-**
**दलं वा तत्स्मृत्वा दहति यदवस्कन्द्य हृदयम् ।। ४।१४ ।।**

**प्रसङ्गः**—राज्ञो दशरथस्य धर्मपत्नीं कौसल्यां निरीक्ष्य जनकोऽत्र व्याहरति ।

**अन्वयः**—अस्याः पत्युः वा रहसि यत् परमं दूषितम् अभूत्, ( तत्र ) दम्पत्योः पृथक् उपालम्भविषयः ( अहमेव ) अभूवम्, तदनु प्रसादे कोपे वा विधिः मदधीनः अभूत्, अथवा तत् स्मृत्वा अलम्, यद् हृदयम् अवस्कन्द्य दहति ।

**व्याख्या**—अस्याः = कौसल्यायाः, पत्युः वा = भर्तुर्दशरथस्य वा, रहसि = एकान्ते, यत् परमम् = गुरु, दूषितम् = दोषः, प्रणयापराधो वा, अभूत्, तत्र दम्पत्योः = जायापत्योः, कौसल्यादशरथयोर्वा, पृथक् = विभिन्नं यथा, उपालम्भविषयः = गर्हणायाः पात्रम्, अभूवम्, अहमेवेति शेषः, तदनु = तदनन्तरम्, प्रसादे = उभयोः प्रसन्नतापादनविषये, कोपे वा = प्रणयकोपसन्धुक्षणे वा, विधिः = व्यवस्था,

मदधीनः = मदायत्तः, आसीदिति शेषः, अहमेव एकः तयोः प्रसादे कोपे वा समर्थोऽभवमित्याशयः, वा = अथवा, तत् = पूर्ववृत्तम्, स्मृत्वा अलम् = तत्स्मरणेन किमपि साध्यं नास्तीत्याशयः, यत् = पूर्ववृत्तं स्मृतं सत्, हृदयम् = चित्तम्, अवस्कन्द्य = अभिभूय, शोषयित्वा, दहति = भस्मीकरोति । असङ्गतिरलङ्कारोऽत्र, शिखरिणी नाम वृत्तश्च ।

(११७) सुहृदिव प्रकटय्य सुखप्रदः प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणो, विधिरहो विशिनष्टि मनोरुजम् ॥४।१५॥

प्रसङ्गः—निखिलामपीमां लीलां निरूप्य जातवैराग्य इव कञ्चुकी विधिविलसितस्यात्र निन्दां विदधाति ।

अन्वयः—अहो ! विधिः प्रथमं सुहृदिव एकरसाम् अनुकूलतां प्रकटय्य सुखप्रदः (सन्) पुनः अकाण्डविवर्तनदारुणः (सन्) मनोरुजं विशिनष्टि ।

व्याख्या—अहो ! = इत्याश्चर्ये, विधिः = विधाता, प्रथमम् = पूर्वम्, सुहृदिव = मित्रमिव, एकरसाम् = एकरूपताम्, अनुकूलताम् = हितैषिताम्, प्रकटय्य = प्रदर्श्य, सुखप्रदः = आनन्दवर्धनः (सन्), पुनः = अनन्तरम्, अकाण्डविवर्तनदारुणः = अनवसरपरिवर्तनभीषणः (सन्), मनोरुजम् = मनोव्यथाम्, विशिनष्टि = वर्धयति । उपमा-विषमालङ्कारावत्र, द्रुतविलम्बितं नाम वृत्तञ्च ।

(११८) कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
सम्बन्धे विपरीतमेव तदभूदाराधनं ते मयि ।
त्वं कालेन तथाविधोऽप्यपहृतः सम्बन्धबीजं च तद्
घोरेऽस्मिन्मम जीवलोकनरके पापस्य धिग्जीवितम् ॥ ४।१७ ॥

प्रसङ्गः—नरपतिपुङ्गवं महाराजं दशरथं संस्मरन् जनकोऽत्र व्याहरति ।

अन्वयः—कन्यायाः पितरः जामातुः आप्तं जनं पूजयन्ति किल, सम्बन्धे (स्थापिते) ते मयि तद् आराधनं विपरीतमेव अभूत्, तथाविधः त्वं कालेन अपहृतः असि, तद् सम्बन्धबीजं च (अपहृतम्) अस्मिन् घोरे जीवलोकनरके पापस्य मम जीवितं धिक् ।

व्याख्या—कन्यायाः = दुहितुः, पितरः = पितृपक्षीयाः, जामातुः = वरस्य, आप्तं जनम् = बन्धुजनम्, पूजयन्ति अर्चन्ति, किल = इति प्रसिद्धौ, सम्बन्धे = आवयोः वैवाहिके सम्बन्धे स्थापिते, ते = जामातृपितुः, मयि = कन्यापितरि, तद् = आराधनम्, पूजनं वा, विपरीतमेव = अन्यथाभूतमेव, अभूत् = अभवत्, तथा-

विधः = तादृशः, त्वम् = भवान्, कालेन = कृतान्तेन, अपहृतः = अस्मत्सकाशात् बलाद् गृहीतः, लोकान्तरं नीत इत्याशयः, असि = विद्यसे, तत् = प्रथितम् सम्बन्धबीजम् = आवयोः सम्बन्धस्य मूलकारणं च, सीतारूपमिति भावः, अपहृतमिति शेषः, अस्मिन् = एतस्मिन्, जीवलोकनरके = संसाररूपे नरके, पापस्य = अपुण्यकृतः, मम = जनकस्य, जीवितम् = जीवनधारणम्, धिक् = गर्हितम्, शोच्यं मे जीवनमित्याशयः। उपमाऽलङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तम्।

( ११९ ) आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहारास्तेषु मा संशयोऽभूत्।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता नैते वाचं विप्लुतार्थां वदन्ति ॥४।१८॥

**प्रसङ्गः**—महर्षेर्वसिष्ठस्य 'भवितव्यं तथेत्युपजातमेव, किन्तु कल्याणोदर्कं भविष्यती'त्यस्मिन् वाक्ये सन्दिहानां कौसल्यां प्रति भगवत्यरुन्धती 'द्विजानां विशेषतस्तत्त्वदर्शिनां वचने सन्देहो नैव विधातव्यः' इत्याशयने स्वकीयं विचारमत्र व्याहरति।

**अन्वयः**—आविर्भूतज्योतिषां ब्राह्मणानां ये व्याहाराः तेषु संशयो मा भूत्, हि एषां वाचि भद्रा लक्ष्मीः निषक्ता, एते विप्लुतार्थां वाचं न वदन्ति।

**व्याख्या**—आविर्भूतज्योतिषाम् = साक्षात्कृतब्रह्मणाम्, ब्राह्मणानाम् = ब्रह्मविदां विप्राणाम्, ये व्याहाराः = वचनानि, तेषु = व्याहारेषु, संशयः = सन्देहः, मा भूत् = न अस्तु, तवेति शेषः, हि = यतः, एषाम् = ब्राह्मणानाम्, वाचि = वाण्याम्, भद्रा = शुभा, लक्ष्मीः = सिद्धिः, निषक्ता = संलग्ना, नित्यं सन्निहितेत्याशयः, एते = ब्रह्मविदो विप्राः, विप्लुतार्थाम् = मिथ्यावाचम्, न वदन्ति = न भाषन्ते। अर्थान्तरन्यासाऽलङ्कारोऽत्र। शालिनी नाम वृत्तम्, तल्लक्षणं यथा—

'शालिन्युक्ताम्तौ तगौ गोऽब्धिलोकैः'। इति।

( १२० ) कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
बटुपरिषदं पुण्यश्रीकः श्रियेव सभाजयन्।
पुनरपि शिशुर्भूतो वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥ ४।१९ ॥

**प्रसङ्गः**—लवं दृष्ट्वा भगवत्यरुन्धती सहर्षं स्वमनसि व्याहरत्यत्र।

**अन्वयः**—कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनः पुण्यश्रीकः श्रिया बटुपरिषदं सभाजयन्निव, ( तथा ) स मे वत्सः रघुनन्दनः पुनरपि शिशुः भूतः, ( एव प्रतीयमानः ) अयं कः ( यः ) दृष्टः सन् झटिति दृशोः अमृताञ्जनं कुरुते।

**व्याख्या**—कुवलयदलस्निग्धश्यामः = नीलकमलपत्रमसृणश्यामलः, शिखण्डकमण्डनः = काकपक्षभूषणः, पुण्यश्रीकः = पवित्रशोभासमन्वितः, श्रिया = स्वकान्त्या, बटुपरिषदम् = ब्रह्मचारीसमाजम्, सभाजयन्निव = आनन्दयन्निव, तथा स मे वत्सः = वात्सल्यभाजनः, रघुनन्दनः = रामचन्द्रः; पुनरपि = भूयोऽपि, शिशुः = बालः, भूतः = सञ्जातः, अयम् = पुरस्थितः, कः = कः शिशुः, दृष्टः = अवलोकितः सन्, झटिति = तत्क्षणमेव, दृशोः = मे नयनयोः, अमृताञ्जनम् = अमृतेन विलेपनम्, कुरुते = विदधाति। उपमोत्प्रेक्षाऽलङ्कारावत्र, हरिणी नाम वृत्तम्।

( १२१ ) चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम्।
मौर्व्या मेखलया नियन्त्रितमधोवासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः॥ ४।२०॥

**प्रसङ्गः**—महीपतिः जनको लवं विलोक्य 'नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये' इत्येवंरूपेण निगदितस्य कञ्चुकीकथनस्यात्र समर्थनं विदधाति।

**अन्वयः**—पृष्ठतः अभितः चूडाचुम्बितकङ्कपत्रं तूणीद्वयं ( वर्तते ), भस्मस्तोकपवित्रलाञ्छनम् उरः रौरवीं त्वचं धत्ते, अधः मौर्व्या मेखलया नियन्त्रितं माञ्जिष्ठकं वासः, पाणौ कार्मुकम्, अक्षसूत्रवलयम्, अपरः पैप्पलः दण्डः।

**व्याख्या**—पृष्ठतः = पृष्ठस्य, अभितः = उभयतः, चूडाचुम्बितकङ्कपत्रम् = शिखासंस्पृष्टकङ्कपत्रम्, तूणीद्वयम् = इषुधियुगलम्, वर्तत इति शेषः, भस्मस्तोकपवित्रलाञ्छनम् = स्वल्पविभूतिपूतचिह्नम्, उरः = वक्षःस्थलम्, रौरवीम् = रुरुमृगसम्बन्धिनीम्, त्वचम् = चर्म, धत्ते = धारयति, अधः = नाभेरधस्तात्, मौर्व्या = मूर्वालतातन्तुनिर्मितया, मेखलया = कटिसूत्रेण, नियन्त्रितम् = बद्धम्, माञ्जिष्ठकम् = मञ्जिष्ठारागरक्तम्, वासः = वस्त्रम्, वर्तत इति शेषः, पाणौ = हस्ते, कार्मुकम् = शरासनम्, अक्षसूत्रवलयम्—वलयाकारम् अक्षसूत्रम् = जपमाला, तथा अपरः पैप्पलः = अश्वत्थशाखानिर्मितः, दण्डः = लगुडः, वर्तत इति शेषः। तुल्ययोगिताऽलङ्कारोऽत्र, शार्दूलविक्रीडित नाम वृत्तम्।

( १२२ ) महिम्नामेतस्मिन्विनयशिशुतामौग्ध्यमसृणो
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः।
मनो मे सम्मोहस्थिरमपि हरत्येष बलवा-
नयोधातुं यद्वत्परिलघुरयस्कान्तशकलः॥ ४।२१॥

**प्रसङ्गः**—महीपतिः जनकः स्वसविधे समागतं लवं सुचिरं निरूप्य साश्चर्य-मत्र व्याहरति ।

**अन्वयः**—एतस्मिन् विनयशिशुतामौग्ध्यमसृणः, विदग्धैः न पुनः अविदग्धैः निर्ग्राह्यः महिम्नाम् अतिशयः ( वर्तते ), यद्वत् परिलघुः अयस्कान्तशकलः अयोधातुं ( हरति ), ( तद्वत् ) बलवान् एषः सम्मोहस्थिरमपि मे मनः हरति ।

**व्याख्या**—एतस्मिन् = बालके, विनयशिशुतामौग्ध्यमसृणः = प्रश्रयशैशवसारल्यकोमलः, विदग्धैः = निपुणैः, न पुनः = न तु, अविदग्धैः = अनिपुणैः, प्राकृतैर्जनैरित्याशयः, निर्ग्राह्यः = निःशेषेण ज्ञेयः, महिम्नाम् = माहात्म्यानाम्, अतिशयः = आधिक्यम्, वर्तत इति शेषः, यद्वत् = यथा, परिलघु = अत्यल्पः, अयस्कान्तशकलः = चुम्बकखण्डः, अयोधातुम् = लोहधातुम्, हरतीति शेषः, तद्वत्, बलवान् = शक्तिसम्पन्नः, एषः = पुरतः, सम्मोहस्थिरमपि = हर्षाद्यावेशेऽप्यक्षोभ्यम्, मे = मम, मनः = चित्तम्, हरति = आकर्षति । उपमाऽलङ्कारोऽत्र, शिखरिणी नाम वृत्तम् ।

( १२३ ) वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
सम्पूर्णप्रतिबिम्बितेव निखिला सैवाकृतिः सा द्युतिः ।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा दैव किमुत्पथैर्मम मनः पारिप्लवं धावति ॥ ४।२२ ॥

**प्रसङ्गः**—नरपतिपुङ्गवो जनको लवे सीतारामयोराकृत्यादिकं विलोक्य साश्चर्यमत्र व्याहरति ।

**अन्वयः**—अस्मिन् शिशौ वत्सायाश्च रघूद्वहस्य च सैव निखिला आकृतिः सा द्युतिः सम्पूर्णप्रतिबिम्बितेव अभिव्यज्यते, सा वाणी, स एव सहजः विनयः, पुण्यानुभावोऽपि असौ हा ! हा ! दैव मम पारिप्लवं मनः किम् उत्पथैः धावति ।

**व्याख्या**—अस्मिन् = एतस्मिन्, शिशौ = बालके, वत्सायाः = सीतायाः, रघूद्वहस्य च = रघुवंशश्रेष्ठस्य रामचन्द्रस्य च, सैव = सीतारामगतैव, निखिला = समग्रा, आकृतिः = आकारः, सा = सीतारामयोरिव, द्युतिः = कान्तिः, सम्पूर्णप्रतिबिम्बितेव = अविकलसङ्क्रान्तेव, अभिव्यज्यते = अभिव्यक्ता भवति, स्पष्टं लक्ष्यत इत्याशयः, सा = रामवाणीतुल्या, वाणी = कण्ठध्वनिः, स एव = रामनिष्ठ एव, सहजः = स्वाभाविकः, विनयः = प्रश्रयः, पुण्यानुभावोऽपि = पावनः प्रभावोऽपि, असौ = रामस्यैव, हा ! हा ! दैव ! = नियते ! मम = जनकस्य, पारिप्लवम् =

चञ्चलम्, मनः = चित्तम्, किम् = किमर्थम्, उत्पथैः = विपरीतमार्गैः, धावति = प्रसरति । तुल्ययोगितालङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तम् ।

(१२४) नूनं त्वया परिभवं च वनं च घोरं
तां च व्यथां प्रसवकालकृतामवाप्य ।
क्रव्याद्गणेषु परितः परिवारयत्सु
सन्त्रस्तया शरणमित्यसकृत्स्मृतोऽस्मि ॥ ४।२३ ॥

प्रसङ्गः—'अलीकपौरापवादोद्विग्नेन राज्ञा निर्वासितां देवीं देवयजनसम्भवां सीतामासन्नप्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त' इत्येवंरूपेण कथावृत्तान्तं समाकर्ण्य कौसल्याजनकौ भृशं दुःखितौ बभूवतुः, तस्मिन्नेव समये सीतां संस्मृत्य जनकोऽत्र व्याहरति ।

अन्वयः—परिभवं च घोरं वनं च प्रसवकालकृतां तां व्यथां च अवाप्य क्रव्याद्गणेषु परितः परिवारयत्सु, संत्रस्तया त्वया नूनं शरणम् इति असकृत् स्मृतः अस्मि ।

व्याख्या—परिभवम् = तिरस्कारम्, घोरम् = भीषणम्, वनम् = काननम्, प्रसवकालकृताम् = प्रसवकालेन जनिताम्, ताम् = तादृशीं तीव्राम्, व्यथाम् = वेदनां च, अवाप्य = प्राप्य, क्रव्याद्गणेषु = हिंस्रजन्तुसमूहेषु, परितः = समन्तात्, परिवारयत्सु = वेष्टमानेषु सत्सु, संत्रस्तया = अतिभीतया, त्वया = सीतया, नूनम् = निश्चितम्, शरणम् = रक्षिता, 'पितः ! क्वासि, रक्ष माम्' इति = एवम्प्रकारेण, असकृत् = अनेकवारं, स्मृतोऽस्मि = आहूतोऽस्मि । उत्प्रेक्षालङ्कारोऽत्र । वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः' । इति ।

(१२५) पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं व्याख्यातैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥ ४।२६ ॥

प्रसङ्गः—बटवोऽत्र लवं प्रति वाजिन आकारं चारुतया वर्णयन्ति ।

अन्वयः—पश्चात् विपुलं पुच्छं वहति, तच्च अजस्रं धूनोति, स दीर्घग्रीवः भवति, तस्य खुराः चत्वारः एव, शष्पाणि अत्ति, आम्रमात्रान् शकृत्पिण्डान् प्रकिरति; अथवा आख्यातैः किम् ? सः पुनः दूरं व्रजति, एहि एहि यामः ।

**व्याख्या**—पश्चात् = पश्चाद्भागे, विपुलम् = बृहत्, पुच्छम् = लाङ्गूलम्, वहति = धारयति, तत् = पुच्छं च, अजस्रम् = निरन्तरम्, धूनोति = कम्पयति, सः = अश्वः, दीर्घग्रीवः = दीर्घकन्धरः, भवति, तस्य = अश्वस्य, खुराः = शफानि, चत्वार एव, न त्वधिका इत्याशयः, शष्पाणि = बालतृणानि, अत्ति = खादति, आम्रमात्रान् = आम्रफलप्रमाणान्, शकृत्पिण्डान् = पुरीषपिण्डान्, प्रकिरति = विक्षिपति, वा = अथवा, आख्यातैः = वर्णनैः, किम् = न किमपि प्रयोजनमित्याशयः, सः = अश्वः, पुनः = भूयः, दूरम् = विप्रकृष्टम्, व्रजति = गच्छति, एहि एहि = आगच्छ, आगच्छ, यामः = वयं व्रजामः, तं द्रष्टुमित्याशयः। स्वभावोक्तिरलंकारोऽत्र, मन्दाक्रान्ता नाम वृत्तम्।

( १२६ ) ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ ४।२६ ॥

**प्रसङ्गः**—कुमारपुङ्गवो लवो बालकानां 'शस्त्राणि स्फुरन्ति' इत्युक्तिं निशम्य धनुरारोपयन्नत्र व्याहरति।

**अन्वयः**—ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्रम् उद्गारिघोरघनघर्घरघोषम् एतत् चापं ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविडम्बिविकटोदरम् अस्तु।

**व्याख्या**—ज्याजिह्वया = मौर्वीरसनया, वलयितोत्कटकोटिदंष्ट्रम् = वेष्टितोग्रकोटिदशनम्, उद्गारिघोरघनघर्घरघोषम् = उदयन्भीषणमेघघर्घरध्वनिम्, एतत् = इदम्, चापम् = धनुः, ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्रजृम्भाविडम्बिविकटोदरम् = ग्रासे = जगत्कवलने, प्रसक्तः = व्यापृतः, अत एव हसन् = अट्टहासं कुर्वन्, यः अन्तकः = कृतान्तः, तस्य वक्त्रयन्त्रस्य—वक्त्रं यन्त्रमिव तस्य = यन्त्रतुल्यमुखस्य, जृम्भाविडम्बि—जृम्भाव्यादानम् विडम्बयति = अनुकरोति, तत्, विकटोदरम् = विकटम्भीषणम्, उदरम् = अन्तरालं यस्य तत्, अस्तु = भवतु। रूपकोपमयोः साङ्कर्यमत्र। वसन्ततिलका नाम वृत्तम्, तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः'। इति।

---

# पञ्चमोऽङ्कः

( १२७ ) नन्वेष त्वरितसुमन्त्रनुद्यमानव्यावल्गत्प्रजवनवाजिना रथेन ।
उद्घातप्रचलितकोविदारकेतुः श्रुत्वा नः प्रधनमुपैति चन्द्रकेतुः ॥

**प्रसङ्गः**—नेपथ्ये सैनिकास्तारस्वरेण चन्द्रकेतोः समागमनं संसूचयन्त्यत्र ।

**अन्वयः**—ननु एषः चन्द्रकेतुः नः प्रधनं श्रुत्वा त्वरितसुमन्त्रनुद्यमानव्यावल्गत्प्रजवनवाजिना रथेन उद्घातप्रचलितकोविदारकेतुः ( सन् ) उपैति ।

**व्याख्या**—ननु = निश्चितम्, एषः = पुरतो दृश्यमानः, चन्द्रकेतुः = एतन्नामकः, नः = अस्माकम्, प्रधनम् = रणम्, श्रुत्वा = निशम्य, त्वरितसुमन्त्रनुद्यमानव्यावल्गत्प्रजवनवाजिना = त्वरासमन्वितसुमन्त्रसारथिप्रेर्यमाणप्रधावत्प्रकृष्टवेगयुक्तघोटकेन, रथेन = स्यन्दनेन, उद्घातप्रचलितकोविदारकेतुः = विषमभूमिकम्पमानकोविदारकाष्ठनिर्मितध्वजः ( सन् ), उपैति = आगच्छति । यमककाव्यलिङ्गालङ्कारावत्र, प्रहर्षिणी नाम वृत्तम् ।

( १२८ ) किरति कलितकिञ्चित्कोपरज्यन्मुखश्री-
रविरतगुणगुञ्जत्कोटिना कार्मुकेन
समरशिरसि चञ्चत्पञ्चचूडश्चमूना-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ ५।२ ॥

**प्रसङ्गः**—'कियता जवेन पृतनानामुपरि शरवृष्टिं विदधाति लवः' इत्यवलोकयितुं सुमन्त्रं सम्प्रेरयति चन्द्रकेतुरत्र ।

**अन्वयः**—कलितकिञ्चित्कोपरज्यन्मुखश्रीः चञ्चत्पञ्चचूडः अयं कोऽपि वीरपोतः समरशिरसि अविरतगुणगुञ्जत्कोटिना कार्मुकेण चमूनाम् उपरि शरतुषारं किरति ।

**व्याख्या**—कलितकिञ्चित्कोपरज्यन्मुखश्रीः—कलितेन = कृतेन; किञ्चित्कोपेन = ईषत्क्रोधेन, रज्यन्ती = रक्तीभवन्ती, मुखश्रीः = वदनकान्तिः, यस्य सः, चञ्चत्पञ्चचूडः—चञ्चन्त्यः = चञ्चलाः, पञ्च चूडाः = शिखा, यस्य सः तथाविधः, अयम् = पुरोवर्तमानः, कोऽपि = अविदितः, वीरपोतः = वीरबालकः, समरशिरसि = समरमूर्धनि, रणक्षेत्रस्याग्रभाग इत्याशयः, अविरतगुणगुञ्जत्कोटिना—अविरतम् = निरन्तरम्, गुणे = मौर्व्यां, गुञ्जन्त्यौ = ध्वनन्त्यौ, कोटी = अग्रभागौ, यस्य तेन, कार्मुकेण = धनुषा, चमूनाम् = सेनानाम्, उपरि, शरतुषारम् = तुषारपातकल्पं बाणवर्षम्, किरति = क्षिपति । उपमालङ्कारोऽत्र, मालिनी नाम वृत्तम् ।

(१२९) मुनिजनशिशुरेकः सर्वतः सैन्यकाये
नव इव रघुवंशस्याप्रसिद्धः प्ररोहः ।
दलितकरिकपोलग्रन्थिटङ्कारघोर-
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ५१३ ॥

**प्रसङ्गः**—लवस्य शौर्यं समालोक्य साश्चर्यं चन्द्रकेतुरत्र व्याहरति ।

**अन्वयः**—रघुवंशस्य नवः अप्रसिद्धः प्ररोहः इव मुनिजनशिशुः एकः सर्वतः सैन्यकाये दलितकरिकपोलग्रन्थिटङ्कारघोरज्वलितशरसहस्रः मे कौतुकं करोति ।

**व्याख्या**—रघुवंशस्य = रघुकुलस्य, नवः = नूतनः, अप्रसिद्धः = रघुवंशप्ररोहत्वेन लोकेऽविदितः, प्ररोहः = अङ्कुरः, इव = यथा, स्थित इति शेषः, मुनिजनशिशुः = मुनिबालकः, एकः = एकाकी, सर्वतः = सर्वत्र, सैन्यकाये = सैन्यव्यूहे, दलितकरिकपोलग्रन्थिटंकारघोरज्वलितशरसहस्रः—दलिताः = विमर्दिताः, करिकपोलानाम् = हस्तिगण्डस्थलानाम्, ग्रन्थयः = सन्धिभागाः, यैः तानि, टङ्कारेण = टमिति भीषणशब्देन घोराणि—भयानकानि, ज्वलितानि च = प्रदीप्तानि, करीणां कठोरकपोलग्रन्थिषु पतनात् अग्निज्वालायुक्तानीति यावत्, शराणाम् = बाणानाम्, सहस्राणि = असंख्याः शराः, यस्य तथाविधः सन्, मे = मम, कौतुकम् = कौतूहलम्, करोति = जनयति । कोऽयं कस्यायमित्यादि ज्ञातुमुत्कण्ठामुत्पादयतीत्याशयः । उपमालङ्कारोऽत्र, मालिनी नाम वृत्तम् ।

(१३०) अतिशयितसुरासुरप्रभावं शिशुमवलोक्य तथैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ॥ ५१४ ॥

**प्रसङ्गः**—लवस्य पराक्रमं वीक्ष्य साश्चर्यं सुमन्त्रोऽत्र व्याहरति ।

**अन्वयः**—अतिशयितसुरासुरप्रभावं तथैव तुल्यरूपं शिशुम् अवलोक्य कुशिकसुतमखद्विषां प्रमाथे धृतधनुषं रघुनन्दनं स्मरामि ।

**व्याख्या**—अतिशयितसुरासुरप्रभावम्—अतिशयितः = अतिक्रान्तः, सुराणाम् = देवानाम्, असुराणां च = दैत्यानां च, प्रभावः = पराक्रमः, येन तथाविधं, तथैव तुल्यरूपम् = यथा रामेण तुल्यप्रभावः, तं, शिशुम् = बालकम्, अवलोक्य = दृष्ट्वा, कुशिकसुतमखद्विषाम्—कुशिकसुतस्य = विश्वामित्रस्य, मखद्विषाम् = यज्ञविघातकानाम्, प्रमाथे = दलने, धृतं धनुर्येन तं धृतधनुषम् = गृहीतचापं, रघुनन्दनम् = रामम्, स्मरामि = स्मरणं विदधामि । अत्रातिशयोक्तिः, उपमा, स्मरणञ्चेत्येतेऽलङ्काराः । पुष्पिताग्रा नाम वृत्तम् ।

(१३१) अयं हि शिशुरेककः समरभारभूरिस्फुर-
त्करालकरकन्दलीकलितशस्त्रजालैर्बलैः ।
क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदवारिदैरावृतः ॥ ५१५ ॥

प्रसङ्गः—चन्द्रकेतुः सुमन्त्रं प्रति 'मम त्वेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्रपते' इति प्रोच्य तत्र कारणं विनिर्दिशति ।

अन्वयः—हि अयम् एककः शिशुः समरभारभूरिस्फुरत्करालकरकन्दलीकलितशस्त्रजालैः क्वणत्कनककिङ्किणीझणझणायितस्यन्दनैः अमन्दमददुर्दिनद्विरदवारिदैः बलैः आवृतः ।

व्याख्या—हि = यतः, अयम् = पुरो दृश्यमानः, एककः = एकाकी, शिशुः = बालकः, समरभारभूरिस्फुरत्करालकरकन्दलीकलितशस्त्रजालैः—समरभारे = तुमुलसंग्रामे, भूरि = प्रभूतम्, यथा स्यात्तथा स्फुरन्ति = दीप्यमानानि, करालानि = भीषणानि, करकन्दलीभिः = कन्दलीसदृशैः विशालैः करैः, कलितानि = परिगृहीतानि, शस्त्रजालानि = आयुधसमूहाः, येषां तैः, क्वणत्कनककिङ्किणीझणझणायितस्यन्दनैः—क्वणन्त्यः = शब्दायमानाः, कनककिङ्किण्यः = स्वर्णघण्टिकाः, ताभिः झणझणायिताः = झणझण इति शब्दं कुर्वन्तः, स्यन्दनाः = रथाः, येषां तैः, अमन्दमददुर्दिनद्विरदवारिदैः—अमन्दानाम् = प्रभूतानाम्, मदानाम् = मदजलानां, दुर्दिनम् = लक्षणया वर्षणम्, येषां तथाविधाः, द्विरदवारिदाः = मेघसदृशः हस्तिनः, येषां तैः, बलैः = सैन्यैः, आवृतः = परिवृतः । अतो मे महती लज्जा इत्याशयः । उपमालङ्कारोऽत्र । पृथ्वी नाम वृत्तम्, तल्लक्षणं यथा—

'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' । इति ।

(१३२) आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरं
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् ।
वेल्लद्भैरवरुण्डमुण्डनिकरैर्वीरो विधत्ते भुवं
तृप्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥ ५१६ ॥

प्रसङ्गः—'लवोऽस्माकं पृतनानां विध्वंसो विदधातीत्यतः सत्वरं स्यन्दनं चालये'ति सुमन्त्रं संप्रेरयितुं चन्द्रकेतुरत्र व्याहरति ।

अन्वयः—अमन्ददुन्दुभिरवैराध्मातम् आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरं ज्यानिर्घोषम् उज्जृम्भयन् वीरः वेल्लद्भैरवरुण्डमुण्डनिकरैः भुवं तृप्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव विधत्ते ।

व्याख्या—अमन्ददुन्दुभिरवैराध्मातम्—अमन्दैः=अनल्पैः, दुन्दुभिरवैः= रणभेरीशब्दैः, आध्मातम्=वर्द्धितम्, ( अत एव ) आगर्जद्गिरिकुञ्जकुञ्जरघटा-निस्तीर्णकर्णज्वरम्—आगर्जन्तः=भयवशाद् गाढं गर्जनं कुर्वन्तः, गिरिकुञ्जेषु= पर्वतनिकुञ्जेषु, ये कुञ्जराः=गजाः, तेषां घटाः=समुदायाः, ताभ्यः निस्तीर्णः= दत्तः, कर्णज्वरः=कर्णक्लेशः, येन तथाविधम्, ज्यानिर्घोषम्=मौर्वीशब्दम्, उज्जृम्भयन्=आविष्कुर्वन्, वीरः=शूरः, वेल्लद्भैरवरुण्डमुण्डनिकरैः—वेल्ल-ताम्=विचेष्टमानानाम्, भैरवानाम्=भीषणानाम्, रुण्डानाम्=कबन्धानाम्, मुण्डनिकरैः=शिरःव्रातैः, भुवम्=रणभूमिम्, तृप्यत्कालकरालवक्त्रविघसव्या-कीर्यमाणामिव—तृप्यतः=प्रचुरभोजनलाभात् तृप्तिं भजमानस्य, कालस्य= कृतान्तस्य, करालवक्त्रस्य=भीषणमुखस्य, विघसैः=भुक्तशेषैः, व्याकीर्यमाणा-मिव=आस्तीर्यमाणामिव, समाच्छादितामिवेत्याशयः, विधत्ते=करोति। अति-शयोक्तिरुत्प्रेक्षा चालङ्कारावत्र, शार्दूलविक्रीडितं नाम वृत्तम्।

( १३३ ) भो भो लव महाबाहो किमेभिस्तव सैनिकैः।
एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥ ५।७ ॥

प्रसङ्गः—'लव' इति सुमन्त्रतो नाम विज्ञाय चन्द्रकेतुस्तं सम्बोध्यात्र व्याहरति।

अन्वयः—भो भोः महाबाहो लव! एभिः सैनिकैः तव किं ( प्रयोजनम् ), एषः अहम्, मामेव एहि, ( तव ) तेजः ( मे ) तेजसि शाम्यतु।

व्याख्या—भो भोः महाबाहो लव!=हे हे विशालभुज लव! एभिः=पुरोव-र्तिभिः, सैनिकैः=मम सैन्यैः, तव=भवतः, किम्=प्रयोजनम्, एषः अहम्=तव समकक्षः प्रतियोद्धा, मामेव, एहि=आगच्छ, तेजः=तव शौर्यम्, तेजसि=मे शौर्ये, शाम्यतु=विलयं यातु। काव्यलिङ्गमलङ्कारोऽत्र, अनुष्टुब्नाम वृत्तम्।

( १३४ ) अयं शैलाघातक्षुभितवडवावक्त्रहुतभु-
क्प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे।
समन्तादुत्सर्पन्घनतुमुलसेनाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ५।९ ॥

प्रसङ्गः—नेपथ्ये पृतनायाः कोलाहलं समाकर्ण्य 'अयमारावः मम कोपा-नलस्य कवलत्वं व्रजतु' इति प्रोच्यात्र लवो व्याहरति।

अन्वयः—प्रलयपवनास्फालितः पयोराशेः ओघः इव अयं समन्तात् उपसर्पन्

घनतुमुलसेनाकलकलः मे शैलाघातक्षुभितवडवावक्त्रहुतभुक्प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु ।

**व्याख्या**—प्रलयपवनास्फालितः—प्रलयपवनेन = कल्पान्तवायुना, आस्फालितः = सञ्चालितः, पयोराशेः = समुद्रस्य, ओघः इव = प्रवाह इव, अयम् = पुरतो वर्तमानः, समन्तात् = सर्वतः, उत्सर्पन् = उच्चरन्, घनतुमुलसेनाकलकलः—घनः = निबिडः, तुमुल = संकुलः, सेनाकलकलः = सैन्यकोलाहलः, मे = मम लवस्य, शैलाघातक्षुभितवडवावक्त्रहुतभुक्प्रचण्डक्रोधार्चिर्निचयकवलत्वम्—शैलानाम् = पर्वतानाम्, आघातेन = सङ्घट्टनेन, क्षुभितः = उद्दीपितः, यो वडवावक्त्रहुतभुक् = अश्वतरीमुखनिर्गतहुताशनः, वडवानल इत्याशयः, स इव प्रचण्डः = उग्रः, यः क्रोधः = कोपः, तस्य = कोपानलस्य, अर्चिषाम् = ज्वालानाम्, निचयस्य = समूहस्य, कवलत्वम् = ग्रासभावम्, व्रजतु = प्राप्नोतु । उपमालङ्कारोऽत्र, शिखरिणी नाम वृत्तम् ।

**( १३५ ) अत्यद्भुतादसि गुणातिशयात्प्रियो मे**
**तस्मात्सखा त्वमसि यन्मम तत्तवैव ।**
**तत्किं निजे परिजने कदनं करोषि**
**नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ ५।१० ॥**

**प्रसङ्गः**—सातिशयं शौर्यं समवलोक्य चन्द्रकेतुर्लवं सम्बोध्यात्र व्याहरति ।

**अन्वयः**—अत्यद्भुतात् गुणातिशयात् मे प्रियः असि, तस्मात् त्वं सखा असि, यत् मम तत् तव एव, तत् किं निजे परिजने कदनं करोषि, ननु एषः चन्द्रकेतुः तव दर्पनिकषः ।

**व्याख्या**—अत्यद्भुतात् = परमविस्मयजनकात्, गुणातिशयात् = शौर्यादीनामाधिक्यात्, ( त्वम् = लवः ) मे = चन्द्रकेतोः, प्रियः, असि = वर्तसे, एवंविधस्य तव दर्शनं, मां प्रीणयतीत्याशयः, तस्मात् = प्रियत्वात्, त्वम् = लवः, सखा = मित्रम्, असि = विद्यसे, यद् = वस्तु, मम = मत्सम्बद्धम्, तत् = वस्तु, तव एव, तत् = तस्मात्, निजे = स्वीये, परिजने = पोष्यवर्गे, मत्सैन्यसमूहे इत्याशयः, किं = किमर्थम्, कदनम् = विमर्दनम्, करोषि = विदधासि, ननु = निश्चितम्, एषः = तव पुरोवर्ती चन्द्रकेतुः, तव = ते, दर्पनिकषः = वीरत्वगर्वस्य परीक्षास्थानम्, अस्तीति शेषः 'चकास्ति योग्येन हि योग्यसंगमः' इति न्यायान्मयैव साकं युद्धं तव शोभते, इति तत्त्वम् । चन्द्रकेतौ निकषारोपाद्रूपकालङ्कारोऽत्र, वसन्ततिलका नाम वृत्तम् ।

( १३६ ) दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा ।
द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥ ५।११ ॥

प्रसङ्गः—तथाविधं परिक्रामन्तं तं लवं निपुणं निरूप्य सुमन्त्रं प्रति तस्य विशिष्टां शोभां संदर्शनाय प्रार्थयते चन्द्रकेतुरत्र ।

अन्वयः—कौतुकवता दर्पेण मयि बद्धलक्ष्यः पश्चाद् बलैः अनुसृतः उदीर्णधन्वा अयं द्वेधा समुद्धतमरुत्तरलस्य माघवतचापधरस्य मेघस्य लक्ष्मीं धत्ते ।

व्याख्या—कौतुकवता = कौतूहलसमन्वितेन, दर्पेण = गर्वेण, मयि=ममोपरि, बद्धलक्ष्यः = निविष्टदृष्टिविक्षेपः, पश्चात् = पृष्ठतः, बलैः = सैन्यैः, अनुसृतः = अनुधावितः, उदीर्णधन्वा—उदीर्णम् = शरनिक्षेपार्थम् उत्तोलितं धनुः यस्य तथाविधः, अयम् = लवः, द्वेधा = द्विप्रकारेण, पुरतः पश्चाच्चेत्याशयः समुद्धतमरुत्तरलस्य = प्रचण्डवायुचञ्चलस्य, माघवतचापधारस्य = ऐन्द्रचापसंधारकस्य, मेघस्य = जलदस्य, लक्ष्मीम्=शोभाम्, धत्ते = धारयति, मेघस्य लक्ष्मीमिव लक्ष्मीं धारयतीति निदर्शनालङ्कारोऽत्र, वसन्ततिलका नाम वृत्तम् ।

( १३७ ) संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन्कवचनिचितैर्मेध्यचर्मोत्तरीये ।
कालज्येष्ठैरभिनववयःकाम्यकाये भवद्भि-
र्योऽयं बद्धो युधि परिकरस्तेन धिग्वो धिगस्मान् ॥ ५।१२॥

प्रसङ्गः—निजपृतनायां समवेतान् महीपतीन् निवर्तयितुमत्र संप्रेरयति चन्द्रकेतुः ।

अन्वयः—संख्यातीतैः द्विरदतुरगस्यन्दनस्थैः कवचनिचितैः कालज्येष्ठैः भवद्भिः एकस्मिन् पदातौ मेध्यचर्मोत्तरीये अभिनववयःकाम्यकाये अत्र ( लवे ) योऽयं युधि परिकरः बद्धः तेन धिग् वः, धिग् अस्मान् ।

व्याख्या—संख्यातीतैः = असंख्येयैः, द्विरदतुरगस्यन्दनस्थैः = वारणाश्वरथाधिष्ठितैः, कवचनिचितैः = वर्मभिः निचितैः, कालज्येष्ठैः = वयसा वृद्धतमैः, भवद्भिः = युष्माभिः, एकस्मिन् = एकाकिनि, पदातौ = पादचारिणि, मेध्यचर्मोत्तरीये = पवित्राजिनप्रावारे, अभिनववयःकाम्यकाये = नूतनवयःकमनीयशरीरे; अत्र = अस्मिन् शिशौ विषये, योऽयं युधि = रणे; परिकरः = कटिबन्धः, बद्धः =

धूतः, तेन = हेतुना, वः = युष्मान्, धिक्, अस्मान् च धिक् । द्वयोः पक्षयोः अति-वैषम्यात् नायं संगच्छते इति विषमालङ्कारोऽत्र, मन्दाक्रान्ता नाम वृत्तम् ।

(१३८) व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत्सैन्यमस्पन्दमास्ते
नियतममितवीर्यं जृम्भते जृम्भकास्त्रम् ।। ५।१३ ।।

प्रसङ्गः—'मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रितम्' इत्येवंरूपेण प्रोक्तस्य—सुमन्त्रस्य वचनं समर्थयमानः चन्द्रकेतुरत्र निगदति ।

अन्वयः—तामसः वैद्युतश्च भीमः व्यतिकरः इव प्रणिहितमपि ग्रस्तमुक्तं चक्षुः हिनस्ति, अथ एतत् सैन्यं लिखितमिव अस्पन्दम् आस्ते नियतम् अमित-वीर्यं जृम्भकास्त्रं जृम्भते ।

व्याख्या—तामसः = तमःसम्बन्धी, वैद्युतः = विद्युतसम्बन्धी च, भीमः = भयंकरः, व्यतिकरः = सम्पर्कः, इव = यथा, प्रणिहितमपि = प्रणिधानपरमपि, ग्रस्तमुक्तम्—आदौ तमसा ग्रस्तम् = आवृतम्, पश्चात् ज्योतिषा मुक्तम् = तमोरूपा-वरणात् निर्मुक्तम्, चक्षुः = नेत्रम्, हिनस्ति = बाधते, अथ = किञ्च, एतत् = अस्म-दीयम्, सैन्यम् = बलम्, लिखितमिव = चित्रार्पितमिव, अस्पन्दम् = निश्चेष्टम्, आस्ते = अवतिष्ठते, नियतम् = निश्चितम्, अमितवीर्यम् = अपरिमितसामर्थ्यम्, जृम्भकास्त्रं = आयुधविशेषम्, जृम्भते = प्रादुर्भवति । उपमाऽनुमानालङ्कारयोः साङ्कर्यमत्र मालिनी नाम वृत्तम् ।

(१३९) पातालोदरकुञ्जपुञ्जिततमः श्यामैर्नभो जृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः ।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवस्तीर्यते
मीलन्मेघतडित्कडारकुहरै र्विन्ध्याद्रिकूटैरिव ।। ५।१४ ।।

प्रसङ्गः—जृम्भकास्त्रस्याविर्भावं द्रढयन् चन्द्रकेतुः भूयोऽपि साश्चर्यमत्र ब्रूते ।

अन्वयः—पातालोदरकुञ्जपुञ्जिततमःश्यामैः उत्तप्तस्फुरदारकूटकपिल-ज्योतिर्ज्वलद्दीप्तिभिः (अत एव) कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैः मीलन्मे-घतडित्कडारकुहरैः विन्ध्याद्रिकूटैः इव (स्थितैः) जृम्भकैः नभः अवस्तीर्यते ।

व्याख्या—पातालोदरकुञ्जपुञ्जिततमःश्यामैः—पातालस्य = रसातलस्य, उदरम् = मध्यभागम्, तदेव तत्र वा कुञ्जः = लतादिपिहितोदरं स्थानम्, तत्र

पुञ्जितम् = राशीभूतम्, तमः = ध्वान्तम्, तद्वत् श्यामैः = कृष्णवर्णैः, उतप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः—उतप्तम् = अग्नितापेन द्रवीभूतम्, (अत एव) स्फुरत् = दीप्यमानम्, आरकूटम् = पित्तलम्, तस्य यत् कपिलम् = पिङ्गलम्, ज्योति = प्रभा, तद्वत् ज्वलन्ती = दीप्यमाना, दीप्तिः = द्युतिः, येषां तैः, (अत एव) कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैः—कल्पस्य = ब्रह्मणो दिवसस्य आक्षेपे = अवसाने युगान्ते इत्याशयः, कठोरैः = प्रचण्डैः, भैरवैः = भीषणैः, मरुद्भिः = प्रलयपवनैः, व्यस्तैः = विक्षिप्तैः, विन्ध्याद्रेरुत्पाटच अन्यत्र नीतैरित्याशयः किञ्च, मीलन्मेघतडित्कडारकुहरैः—मीलन्तः = गतिवशात् संयुज्यमानाः, मेघाः = श्यामघनाः, येषु तैः, तडिद्भिः = विद्युद्भिः, कडाराणि = पिङ्गलानि, कुहराणि = गह्वराणि, येषां तैः, विन्ध्याद्रिकूटैः = विन्ध्याचलशृङ्गैः, इव = यथा, स्थितैरिति शेषः, जृम्भकैः = जृम्भकास्त्रैः, नभः = आकाशम्, अवस्तीर्यते = आच्छाद्यते। उपमाऽलङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तम्।

**(१४०) यदृच्छासंवादः किमु, किमु गुणानामतिशयः**
**पुराणो वा जन्मान्तरनिविडबद्धः परिचयः।**
**निजो वा सम्बन्धः किमु विधिवशात्कोऽप्यविदितः**
**ममैतस्मिन् दृष्टे हृदयमवधानं रचयति ॥ ५।१६ ॥**

**प्रसङ्गः**—कुमारावुभावन्योन्यसंदर्शनेन परमां प्रीतिमवाप्य परस्परं व्याहरतः।

**अन्वयः**—किमु यदृच्छासंवादः, किमु गुणानाम् अतिशयः, जन्मान्तरनिबिडबद्धः पुराणः परिचयो वा, किमु विधिवशात् कोऽपि अविदितः निजः सम्बन्धो वा, एतस्मिन् दृष्टे मम हृदयम् अवधानं रचयति।

**व्याख्या**—किमु = इति विकल्पे, यदृच्छासंवादः = दैवयोगेन समागमः, किमु = किम्, गुणानाम् = शौर्यादीनाम्, अतिशयः = प्रकर्षः, वा = अथवा, जन्मान्तरनिबिडबद्धः—जन्मान्तरे = अन्यस्मिन् जन्मनि, निबिडं यथा तथा, बद्धः पुराणः = प्राक्तनः, परिचयः = संस्तवः, किमु विधिवशात् = भाग्यवशात्, कोऽपि अविदितः = अविज्ञातः, निजः = आत्मीयः, सम्बन्धो वा = स्वजनभावो वा, एतस्मिन् = कुमारे, दृष्टे = अवलोकिते सति, मम हृदयम् = चित्तम्, अवधानम् = एकाग्रताम्, रचयति = गमयति। सन्देहकाव्यलिङ्गश्चालङ्कारावत्र, शिखरिणी नाम वृत्तम्।

( १४१ ) अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥ ५।१७ ॥

**प्रसङ्गः**—सुमन्त्रश्चन्द्रकेतुं प्रति लौकिकानां जनानां 'तारामैत्रकं चक्षूरागः' इति वचनं समर्थ्यमानस्तत्र प्रमाणान्तरमुपस्थापयति ।

**अन्वयः**—अहेतुः यः पक्षपातः, तस्य प्रतिक्रिया नास्ति, स स्नेहात्मकः तन्तुः अन्तर्मर्माणि सीव्यति ।

**व्याख्या**—अहेतुः = निर्निमित्तः, यः पक्षपातः = आसक्तिविशेषः, तस्य, प्रतिक्रिया = प्रतीकारः, नास्ति = न विद्यते, सः = तादृशः, स्नेहात्मकः—स्नेह एव आत्मा = स्वरूपम्, यस्य तथाविधः, तन्तुः = सूत्रम्, अस्तीति शेषः, यः, अन्तर्मर्माणि = आभ्यन्तराणि मर्मस्थानानि, सीव्यति = स्यूतानि विदधाति, प्रेमिणोर्हृदयद्वयं संयोज्य एकीकरोतीत्याशयः । अर्थान्तरन्यासालङ्कारोऽत्र, अनुष्टुब्नाम वृत्तञ्च ।

( १४२ ) एतस्मिन् मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे ।
यत्प्राप्तौ परिरम्भणाभिलाषा-
दुन्मीलत्पुलककदम्बमङ्गमास्ते ॥ ५।१८ ॥

**प्रसङ्गः**—उभावपि कुमारावत्र पुनरप्यन्योऽन्यम्प्रति निगदतः ।

**अन्वयः**—मसृणितराजपट्टकान्ते एतस्मिन् शरीरे सायकाः कथमिव मोक्तव्याः, यत्प्राप्तौ परिरम्भणाभिलाषात् मम अङ्गम् उन्मीलत्पुलककदम्बम् आस्ते ।

**व्याख्या**—मसृणितराजपट्टकान्ते—मसृणितः = मसृणः कृतः, श्लक्ष्णीकृतः, यः राजपट्टः = उत्कृष्टदुकूलभेदः, तद्वत् कान्तम् = मनोहरम्, तस्मिन्, एतस्मिन् = पुरोवर्तिनि, शरीरे = काये, सायकाः = शराः, कथमिव = केन प्रकारेण, मोक्तव्याः = प्रहाराय निक्षेपणीयाः, मयेति शेषः, यत्प्राप्तौ = यस्य शरीरस्य लाभे सति, परिरम्भणाभिलाषात् = आलिङ्गनमनोरथात्, उन्मीलत्पुलककदम्बम् = उन्मीलत् = आविर्भवत्, पुलकानाम् = रोमाञ्चकानाम्, कदम्बम् = समूहो, यस्मिन् तथाविधम्, अस्ति = विद्यते । उपमाकाव्यलिङ्गयोरङ्गाङ्गिभावेन साङ्कर्यमत्र, प्रहर्षिणी नाम वृत्तम् ।

( १४३ ) किन्त्वाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापि हि तेन किं न विषयो जायेत यस्येदृशः ।

किं वक्ष्यत्ययमेव युद्धविमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ ५।१९ ॥

**प्रसङ्गः**—द्रष्टव्यम्, श्लोक १४२।

**अन्वयः**—किन्तु आक्रान्तकठोरतेजसि शस्त्रं विना का नाम गतिः? तेन शस्त्रेण अपि हि किम्, यस्य ईदृशः (वीरः) विषयः न जायेत, आयुधे उद्यतेऽपि युद्धविमुखं माम् अयम् एव किं वक्ष्यति? दारुणरसः वीराणां समयः स्नेहक्रमं बाधते हि।

**व्याख्या**—किन्तु = इति पक्षान्तरे, आक्रान्तकठोरतेजसि = अधिगतोग्रशौर्ये, शस्त्रं विना = आयुधप्रयोगं विना, का नाम गतिः = क उपायो भवेत्, तेन = तथाविधेन, शस्त्रेण अपि = अस्त्रेणापि, हि = निश्चयेन, किम्? साध्यत इति शेषः, यस्य = शस्त्रस्य, ईदृशः = एवंविधः, (वीरः = शूरः) विषयः = पात्रम्, प्रयोगस्थलं वा, न जायेत = न भवेत्, आयुधे = शस्त्रे, उद्यतेऽपि = मयि प्रहर्तुम् उत्तोलितेऽपि, युद्धविमुखम् = रणात् पराङ्मुखम् सन्तम्, माम्, अयमेव, तिष्ठन्तु तावदन्ये इत्याशयः, किं वक्ष्यति = मत्सम्बन्धे किं मंस्यते, नूनं मां कापुरुषं मंस्यते इति भावः दारुणरसः = निष्ठुरतामयास्वादः, वीराणाम् = शूराणाम्, समयः = आचारः, स्नेहक्रमम् = प्रणयप्रसरम्, बाधते हि = रुणद्ध्येव। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासाऽलङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तम्।

(१४४) मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम्।
लतायां पूर्वलूनायां प्रसवस्योद्भवः कुतः ॥ ५।२० ॥

**प्रसङ्गः**—सुमन्त्रो लवं निर्वर्ण्य रामरूपसाम्यात् सीतायाः पुत्रोऽयमिति भ्रान्तं स्वहृदयं सम्बोध्यात्र व्याहरति।

**अन्वयः**—मनोरथस्य यद् बीजं तद् दैवेन आदितः हृतम्, पूर्वलूनायां लतायां प्रसवस्य उद्भवः कुतः?

**व्याख्या**—मनोरथस्य = सीतापुत्रोऽयमिति अभिलाषस्य यद् बीजम् = मूलकारणम्, तद् = बीजम्, दैवेन = प्रतिकूलभाग्येन, आदितः = पूर्वमेव, गर्भिणीदशायामेवेत्याशयः, हृतम् = अपहृतम्, तस्मादसङ्गतो मे मनोरथ इति भावः, पूर्वलूनायाम् = प्रसवोद्भवकालात् पूर्वमेव छिन्नायाम्, लतायाम् = व्रतत्याम्, प्रसवस्य = पुष्पस्य, उद्भवः = उत्पत्तिः, कुतः = कस्मादेव कारणात् भवेत्? नैव कथमप्येतत्सम्भवतीत्याशयः। दृष्टान्तालङ्कारोऽत्र, 'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्' इति लक्षणात्। अनुष्टुब्वृत्तञ्च।

( १४५ ) जातस्य ते पितुरपीन्द्रजितो निहन्तु-
वंत्सस्य वत्स कति नाम दिनान्यमूनि ।
तस्याप्यपत्यमनुतिष्ठति वीरधर्मं
दिष्ट्या गतं दशरथस्य कुलं प्रतिष्ठाम् ।। ५।२४ ।।

**प्रसङ्गः**—सुमन्त्रश्चन्द्रकेतुं सस्नेहास्नं परिष्वज्यात्र व्याहरति ।

**अन्वयः**—वत्स, इन्द्रजितः, निहन्तुः वत्सस्य ते पितुः अपि जातस्य अमूनि कति नाम दिनानि ( व्यतीतानि ), तस्य अपि अपत्यं वीरधर्मम् अनुतिष्ठति, दिष्टया ! दशरथस्य कुलं प्रतिष्ठां गतम् ।

**व्याख्या**—वत्सः ! = चन्द्रकेतो !, इन्द्रजितः = इन्द्रस्य विजेतुः, रावणसुतस्य मेघनादस्येत्याशयः, निहन्तुः = विनाशयितुः, वत्सस्य = वात्सल्यभाजनस्य, ते = तव, पितुरपि = लक्ष्मणस्यापि, जातस्य = समुत्पन्नस्य, अमूनि कति नाम दिनानि = स्वल्पान्येव वासराणि व्यतीतानि, तस्यापि = तादृगल्पवयसोऽपि, अपत्यम् = पुत्रः, वीरधर्मम् = शूरोचिताचारम्, अनुतिष्ठति = अनुष्ठितं करोति, पालयतीत्याशयः, दिष्टया = इत्यानन्दसूचकमव्ययम्, दशरथस्य = तन्नाम्नः नरपतेः, कुलम् = वंशः, प्रतिष्ठां = गौरवान्विताम् स्थितिं, गतम् = प्राप्तम् । काव्यलिङ्गमलङ्कारोऽत्र, वसन्ततिलका नाम वृत्तम् ।

( १४६ ) यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन्दृष्टिर्मम कलहकामः पुनरयम् ।
रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालोल्बणरसः ।। ५।२६ ।।

**प्रसङ्गः**—चन्द्रकेतोर्वचनानि निशम्य लवो वीरकरुणयोः सम्मिश्रणञ्च विज्ञायात्राभिधत्ते ।

**अन्वयः**—यथा इन्दौ समुपोढे सति कुमुदिनी आनन्दं व्रजति, तथैव अस्मिन् ( चन्द्रकेतौ समुपोढे सति ) मम दृष्टिः ( आनन्दं व्रजति ), रणत्कारक्रूरक्वणित-गुणगुञ्जद्गुरुधनुर्धृतप्रेमा विकचविकरालोल्बणरसः अयं ( मे ) बाहुः पुनः कलहकामः ।

**व्याख्या**—यथा = येन प्रकारेण, इन्दौ = चन्द्रे, समुपोढे सति = समुदिते सति, कुमुदिनी = कुमुद्वती, आनन्दम् = हर्षम्, व्रजति = गच्छति, तथैव = तेनैव प्रकारेण, अस्मिन् = चन्द्रकेतौ, मम = लवस्य, दृष्टिः = लोचनम्, आनन्दं

व्रजतीति शेषः, रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनुर्धृतप्रेमा—रणत्कारेण = रणत् इत्यव्यक्तशब्देन, क्रूरम् = निष्ठुरम्, क्वणितम् = निनादः, यस्य तथाविधो यो गुणः = ज्या, तेन गुञ्जत् = ध्वनत्, गुरुधनुः = महद्धनुः, तस्मिन् धृतम् = स्थापितम्, प्रेम = अनुरक्तिः, येन तथाविधः, विकचविकरालोल्बणरसः—विकचः = स्फुटः, विकरालः = अतिभीषणः, उल्बणरसः = उद्धतरसः, रौद्ररसः वीररसो वा, यस्य तथाविधः, अयम् = एषः, मे = मम, बाहुः = भुजः, पुनः = भूयः, कलहकामः = रणाभिलाषयुतः, विद्यत इति शेषः । विषमोपमे चालङ्कारा-वत्र, शिखरिणी नाम वृत्तञ्च ।

**( १४७ ) देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पिता**
**त्वां मैत्रावरुणोऽभिनन्दतु गुरुर्यस्ते गुरूणामपि ।**
**ऐन्द्रावैष्णवमाग्निमारुतमथो सौपर्णमोजोऽस्तु ते**
**देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥ ५।२८ ॥**

**प्रसङ्गः**—स्यन्दनादवतरता सौमित्रिणा चन्द्रकेतुना प्रणतः सुमन्त्रस्तस्मै शुभाशीर्वादं वितरन्नत्र व्याहरति ।

**अन्वयः**—यः ते गोत्रस्य पिता ( सः ) देवः सविता समरे त्वां धिनोतु, यः गुरूणाम् अपि गुरुः ( सः ) मैत्रावरुणः त्वाम् अभिनन्दतु, ऐन्द्रावैष्णवम् आग्नि-मारुतम् अथो सौपर्णम् ओजः ते अस्तु, रामलक्ष्मणधनुर्ज्याघोषमन्त्रश्च जयं देयात् एव ।

**व्याख्या**—यः = भानुः, ते = तव, गोत्रस्य = वंशस्य, पिता = प्रवर्तकः, स देवः = द्योतमानः, सविता = भगवान् भास्करः, समरे = रणे, त्वाम् = चन्द्रकेतुम्, धिनोतु = प्रीणयतु यः, ते = तव, गुरूणाम् अपि = पूज्यानामपि, गुरुः = पूज्यः, स मैत्रावरुणः = भगवान् वसिष्ठः, त्वाम् = चन्द्रकेतुम्, अभिनन्दतु = शुभाशिषा संवर्धयतु, ऐन्द्रावैष्णवम् = इन्द्रसम्बन्धि, विष्णुसम्बन्धि च, आग्निमारुतम् = वैश्वानरसम्बन्धि वायुसम्बन्धि च, अथो = अथ च, सौपर्णम् = तार्क्ष्यसम्बन्धि च, ओजः = बलम्, ते = तव, अस्तु = भवतु, रामलक्ष्मणधनुर्ज्याघोषमन्त्रश्च—राम-लक्ष्मणयोः धनुषः यः ज्याघोषः = मौर्वीटङ्कारः, स एव मन्त्रः, स च जयम् = विजयम्, देयात् एव = अवश्यमेव ददातु । निदर्शनालङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तम् ।

**( १४८ ) वयमपि न खल्वेवम्प्रायाः क्रतुप्रतिघातिनः**
**क इह न गुणैस्तं राजानं जनो बहु मन्यते ।**

तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाऽकरोत् ॥ ५।२९ ॥

**प्रसङ्गः**—सुमन्त्राननात् भगवतो रामस्याभिधानं समाकर्ण्य लवोऽत्र चन्द्रकेतुं प्रति व्याहरति ।

**अन्वयः**—वयमपि एवम्प्रायाः क्रतुप्रतिघातिनः न खलु, इह च कः वा गुणैः तं राजानं न बहुमन्यते, तदपि तुरङ्गमरक्षिणां सः व्याहारः अखिलक्षत्राक्षेप-प्रचण्डतया मे विकृतिम् अकरोत् खलु ।

**व्याख्या**—वयमपि=अहमपि, एवम्प्रायाः=बाहुल्येन एवंविधाः, क्रतुप्रति-घातिनः=यागविघातकाः, न खलु=नैव स्मः, इह=अस्मिन् जगति, कः वा=को वा जनः, गुणैः=सौजन्यादिभिः हेतुभिः, त राजानम्=रामचन्द्रम्, न बहुमन्यते =न आद्रियते, सर्वे एव जनाः गुणैः तं बहुमन्यन्ते इति भावः, तदपि=तथापि, तस्मिन् बहुमानसत्त्वेऽपि, तुरङ्गमरक्षिणाम्=अश्वमेधीयाश्वस्य रक्षकानां, स व्याहारः=तादृश वचनम् अखिलक्षत्राक्षेपप्रचण्डतया=अशेषक्षत्रियतिरस्कारोग्र-तया, मे=मम लवस्य, विकृतिम्=विकारम्, अकरोत् खलु=अजनयद् एव । अर्थापत्तिरलङ्कारोऽत्र, हरिणी नाम वृत्तम् ।

( १४९ ) ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।
सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः ॥ ५।३० ॥

**प्रसङ्गः**—सैनिकानां राक्षसीं वाचमेव प्रतिपादयति लवोऽत्र ।

**अन्वयः**—ऋषयः उन्मत्तदृप्तयोः वाचं राक्षसीम् आहुः, सा सर्ववैराणां योनिः, सा हि लोकस्य निर्ऋतिः ।

**व्याख्या**—ऋषयः=मन्वादयः, उन्मत्तदृप्तयोः=उन्मादरोगग्रस्तस्य, सुरा-पानेन गर्वितस्य च, वाचम्=वाणीम्, राक्षसीम्=राक्षसजनोचिताम्, आहुः=वदन्ति, सा=राक्षसीवाक्, सर्ववैराणाम्=सर्वेषां वैराणाम्, योनिः=कारणम्, सा=राक्षसीवाक्, हि=निश्चितम्, लोकस्य=जगतः, निर्ऋतिः=अलक्ष्मीः, अशुभाधिष्ठात्री देवता इत्याशयः । रूपकालङ्कारोऽत्र, अनुष्टुब्नाम वृत्तञ्च ।

( १५० ) कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्ति सूते दुष्कृतं या हिनस्ति ।
तां चाप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥ ५।३१ ॥

प्रसङ्गः—'सत्यां मधुरां वाचं सुधियोऽभिष्टुवन्ति' इत्यभिधाय लवश्चन्द्रकेतुं प्रति व्याहरति ।

अन्वयः—या कामान् दुग्धे, अलक्ष्मीं विप्रकर्षति, कीर्तिं सूते, दुष्कृतं हिनस्ति, ताम् एतां मङ्गलानां मातरं सूनृतां वाचं च धीराः धेनुम् अपि आहुः ।

व्याख्या—या = सूनृतावाक्, कामान् = मनोरथान्, दुग्धे = प्रपूरयति, अलक्ष्मीम्–निर्ऋतिम्, अशुभं वा, विप्रकर्षति = दूरीकरोति, कीर्तिम् = यशः, सूते = जनयति, दुष्कृतम्=पापम्, हिनस्ति–विनाशयति, ताम्=अखिलकल्याणप्रदत्वेन प्रथिताम्, एताम् = प्रस्तूयमानाम्, मङ्गलानाम् = कल्याणानाम्, मातरम् = जननीम्, सूनृताम् = प्रियसत्याम्, वाचं च = वाणीं तु, धीराः = पण्डिताः, धेनुमपि = कामधेनुमपि, आहुः = वदन्ति । निदर्शनालङ्कारोऽत्र । शालिनी नाम वृत्तम्, तल्लक्षणं यथा—

'शालिन्युक्ताम्तौ तगौ गोऽब्धिलोकैः' । इति ।

( १५१ ) सिद्धं ह्येतद्वाचिवीर्यं द्विजानां
बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन्दान्ते का स्तुतिस्तस्य राज्ञः ॥ ५।३३ ॥

प्रसङ्गः—परशुरामदमने न किमपि शूरत्वं महाराजस्य रामचन्द्रस्येति साधयितुं लवश्चन्द्रकेतुं प्रति व्याहरति ।

अन्वयः—एतत् सिद्धं ( यत् ) द्विजानां वीर्यं वाचि हि ( भवति ) यत् तु बाह्वोः वीर्यं तत् क्षत्रियाणाम्, जामदग्न्यः शस्त्रग्राही ब्राह्मणः, तस्मिन् दान्ते तस्य राज्ञस्य का स्तुतिः ?

व्याख्या—एतत् = वक्ष्यमाणम्, सिद्धम् = सर्वजनविदितम्, यत् द्विजानाम् = ब्राह्मणानां, वीर्यं = सामर्थ्यम्, वाचि हि = वाण्यामेव, तु=परन्तु, बाह्वोः=भुजयोः, यत् वीर्यम् = सामर्थ्यम्, तत् = वीर्यं, क्षत्रियाणाम् = राजन्यानाम्, जामदग्न्यः = जमदग्निपुत्रः परशुरामः, शस्त्रग्राही = शस्त्रधारी, ब्राह्मणः = ब्राह्मणजातीयः, तस्मिन् = जामदग्न्ये, दान्ते = विजिते, तस्य = भवतः, राज्ञः=पतेः, रामचन्द्रस्य, का स्तुतिः = प्रशंसा भवति ? न भवतीत्याशयः । परिसंख्यालङ्कारोऽत्र, शालिनी नाम वृत्तम् ।

( १५२ ) कोऽप्येष सम्प्रति नवः पुरुषावतारो
वीरो न यस्य भगवान्भृगुनन्दनोऽपि ।

पर्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितान्यपि यो न वेद ॥ ५।३४ ॥

**प्रसङ्गः**—लववचनेन परिकुपितश्चन्द्रकेतुः सोन्माथमिव सुमन्त्रं प्रति अत्र व्याहरति ।

**अन्वयः**—सम्प्रति एषः कोऽपि नवः पुरुषावतारः, यस्य भगवान्, भृगुनन्दनः अपि वीरो न, यः पर्याप्तसप्तभुवनाभयदक्षिणानि पुण्यानि तातचरितानि अपि न वेद ।

**व्याख्या**—सम्प्रति = अधुना, एषः = लवः, कोऽपि = अविदितमहिमा, नवः = अपूर्वः, पुरुषावतारः = पुरुषरूपेण अवतारः, यस्य = जनस्य, भगवान् = माहात्म्यसम्पन्नः, भृगुनन्दनः = भृगुवंशानां नन्दयिता, परशुरामोऽपि, वीरो न = वीरपदं नार्हति, यः = पुरुषः, पर्याप्तसप्तभुवनाभयदक्षिणानि—सप्तानां भुवनानां समाहारः सप्तभुवनं, पर्याप्ता = परिपूर्णा, सप्तभुवनस्य अभयम् = भयनिवारणमेव, दक्षिणा = यज्ञान्ते दीयमानं दानम्, येषु तानि, पुण्यानि = पावनानि, तातचरितानि = रामचरितानि, न वेद = न जानाति । रामचरितरूपक्रतूनां सप्तभुवनाभयदानमेव दक्षिणेति वर्णनाद् रूपकालङ्कारोऽत्र, वसन्ततिलका नाम वृत्तञ्च ।

( १५३ ) वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु किं वर्ण्यते
सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।
यानि त्रीण्यपराङ्मुखान्यपि पदान्यासन् खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ५।३५ ॥

**प्रसङ्गः**—चन्द्रकेतुमुखेन रघुपतेर्महिमानं निशम्य लवोऽत्र सोपहासः आक्षिपन् व्याहरति ।

**अन्वयः**—ते वृद्धाः ( अतः ) विचारणीयचरिताः न ( सन्ति ), ( ते तथैव ) तिष्ठन्तु, किं वर्ण्यते ? सुन्दस्त्रीमथने अपि अकुण्ठयशसः ते लोके महान्तो हि; खरायोधने यानि अपराङ्मुखानि अपि त्रीणि पदानि आसन्, वा इन्द्रसूनुनिधने यत् कौशलं तत्र अपि जनः अभिज्ञः ।

**व्याख्या**—ते = समः, वृद्धाः = वयोवृद्धाः, अतः विचारणीयचरिताः—विचारणीयानि = पर्यालोचनीयानि, चरितानि = अनुष्ठितानि, कार्याणि येषां तथाविधाः, न = नहि, भवन्तीति शेषः, अतः तिष्ठन्तु = आस्ताम्, अविचार-

णीयचरिता एव वर्तन्तामित्याशयः, सुन्दस्त्रीमथनेऽपि = ताडकावधेऽपि, अकुण्ठ-यशसः = अप्रतिहतकीर्तयः, ते, लोके = जगति, महान्तो हि = महान्तः एव, पूज्याः एव वा, खरायोधने = खरेण सह युद्धे, यानि अपराङ्मुखान्यपि = अपरा-वृत्तवदनान्यपि, त्रीणि पदानि = पदक्षेपाः, आसन् = अभवन्, वा = अथवा, इन्द्र-सूनुनिधने = शक्रपुत्रबालिहनने, यत् कौशलम् = नैपुण्यम् तत्रापि = तेषु सर्वेषु, जन = लोकः, अभिज्ञः = ज्ञाता, सर्वं तद् विदितं लोके—इत्याशयः। आक्षेपा-लङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तञ्च ।

---

## षष्ठोऽङ्कः

( १५४ ) झणज्झणितकङ्कणक्वणितकिङ्किणीकं धनु-
र्ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम् ।
वितत्य किरतोः शरानविरतस्फुरच्चूडयो-
र्विचित्रमभिवर्तते भुवनभीममायोधनम् ॥ ६।१ ॥

प्रसङ्गः—कुमारयोर्युद्ध-कौशलं प्रदर्शयितुं षष्ठाङ्कमारभमाणः विद्याधरोऽत्र व्याहरति ।

अन्वयः—झणज्झणितकङ्कणक्वणितकिङ्किणीकं ( तथा ) ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलं धनुः वितत्य शरान् किरतोः ( किञ्च ) अविरतस्फुरच्चूडयोः ( अनयोः कुमारयोः ) विचित्रं भुवनभीमम् आयोधनम् अभिवर्तते ।

व्याख्या—झणज्झणितकङ्कणक्वणितकिङ्किणीकम् –झणज्झणितम् = सञ्जातझणज्झणशब्दम्, यत् कङ्कणम् = करभूषणम्, तदिव क्वणिताः = शब्दायमानाः, किङ्किण्यः = क्षुद्रघण्टिकाः यस्य तत्, ध्वनद्गुरुगुणाटनीकृतकरालकोलाहलम्—ध्वनता = शब्दायमानेन, गुरुणाः = विपुलेन, गुणेन = शिञ्जिन्या, अटनीभ्याम् = धनुकोटिभ्याम् च कृतः = जनितः, करालः = भीषणः, कोलाहलः = कलकलः, यस्य तत्, धनुः = चापम्, वितत्य = विस्फार्य, शरान् = बाणान्, किरतोः = प्रक्षिपतोः, अविरतस्फुरच्चूडयोः—अविरतम् = निरन्तरम्, स्फुरन्त्यः = इतस्ततः शरीरसञ्चालनात् प्रचलन्त्यः, चूडाः = शिखाः ययोः तथाविधयोः, अनयोः कुमारयोः विचित्रम्–विस्मयकरम्, भुवनभीमम् = लोकभयङ्करम्, आयोधनम् = युद्धम्, अभिवर्तते = सम्मुखम् वर्तते । उपमालङ्कारोऽत्र । पृथ्वी नाम वृत्तम्, तल्लक्षणं यथा—'जसौ जसयलावसुग्रहयतिश्च पृथ्वी गुरुः' । इति ।

( १५५ ) त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः ।
पुटभेदो ललाटस्थनीललोहितचक्षुषः ॥ ६।२ ॥

प्रसङ्गः—आकाशं विद्युत्प्रभापिशङ्कितं विलोक्य किमेतदित्याकुलतया विद्याधरोऽप्यसंविदानोऽत्र व्याहरति ।

अन्वयः—ललाटस्थनीललोहितचक्षुषः त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः पुटभेदः ( सञ्जात इति शेषः ) ।

व्याख्या—ललाटस्थनीललोहितचक्षुषः—ललाटस्थस्य = भालस्थितस्य; नील-

लोहितचक्षुषः—नीललोहित=रुद्रः, तस्य चक्षुषः=नेत्रस्य, तृतीयनेत्रस्येत्याशयः, त्वाष्ट्रयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः–त्वष्टुः=विश्वकर्मणः, इदं त्वाष्ट्रम्=त्वष्टृसम्बन्धि, यन्त्रम्=शाणयन्त्रम्, तस्य भ्रमिभिः=भ्रमणक्रियाभिः, भ्रान्तः=आवर्तितः, यो मार्तण्डः=सूर्यः, तस्य यत् ज्योतिः=प्रभा, पुनः-पुनः आवर्तनात् तडित्प्रभावत् परितं प्रसृतं तेज इत्याशयः, तदिव उज्ज्वलः=प्रकाशमानः, पुटभेदः–पुटस्य=आवरणस्य, भेदः=विघटनम्, समुन्मीलनमित्याशयः, सञ्जात इति शेषः। उपमासन्देहालङ्कारावत्र, अनुष्टुब्नाम वृत्तञ्च।

(१५६) अवदग्धकर्बुरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः।
दहति ध्वजांशुकपटावलीमिमां
नवकिंशुकद्युतिसविभ्रमः शिखी॥ ६।४॥

प्रसङ्गः—चन्द्रकेतुना प्रयुक्तस्य 'आग्नेय'-संज्ञकस्यास्त्रस्य प्रभावं वर्णयन् विद्याधरोऽत्र निगदति।

अन्वयः—अवदग्धकर्बुरितकेतुचामरैः विमानमण्डलैः अपयातम् एव हि, नवकिंशुकद्युतिसविभ्रमः शिखी इमां ध्वजांशुकपटावलीं दहति।

व्याख्या—अवदग्धकर्बुरितकेतुचामरैः—अवदग्धानि = अंशतः दग्धानि, अत एव कर्बुरितानि=शबलीकृतानि, केतवः=ध्वजाः, चामराणि=बालव्यजनानि च, येषां येषु वा तथाविधैः, विमानमण्डलैः=देवयानसमूहैः, अपयातमेव हि=दाहविषयाद् दूरे गतम्, नवकिंशुकद्युतिसविभ्रमः—नवं किंशुकम्=पलाशपुष्पम्, तस्य द्युतिः=कान्तिः, तथा समानः विभ्रमः=विलासः, यस्य स तथोक्तः, नवपलाशपुष्पकान्तिसदृशः, शिखी=अग्निः, इमाम्=पुरःस्थिताम्, ध्वजांशुकपटावलीम्—ध्वजानाम्=केतूनाम्, अंशुकपटानाम्=सूक्ष्मवस्त्राणाम्, आवलीम्=पङ्क्तिम्, दहति=भस्मीकरोति। निदर्शनालङ्कारोऽत्र। मञ्जुभाषिणी नाम वृत्तम्, तल्लक्षणं यथा—

'सजसा जगौ भवति मञ्जुभाषिणी'। इति।

(१५७) त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोषस्य गुप्त्यै।
सामर्थ्यानामिव समुदयः सञ्चयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः॥ ६।९॥

**प्रसङ्गः**—भगवान् रामचन्द्रोऽत्र लवं निरूप्य 'दिष्टया अतिगम्भीरमधुर कल्याणाकृतिरयं वयस्यो वत्सस्य' इति प्रोच्य नैकविधसम्भावनामभिव्यनक्ति।

**अन्वयः**—लोकान् त्रातुम् अस्त्रवेदः कायवान् परिणतः इव ब्रह्मकोषस्य गुप्त्यै क्षात्रो धर्मः तनुम् श्रितः इव, सामर्थ्यानां समुदयः इव, गुणानां सञ्चयः वा जगत्पुण्यनिर्माणराशिः आविर्भूय स्थितः इव।

**व्याख्या**—लोकान् = भुवनानि, त्रातुम् = रक्षितुम्, अस्त्रवेदः = धनुर्वेदः, कायवान् = मूर्तिमान्, परिणत इव = सवृत इव, ब्रह्मकोषस्य = वेदनिधेः, गुप्त्यै = रक्षायै, तनुम् = शरीरम्, श्रित इव = आश्रित इव, देहवान् संवृत्त इवेत्याशयः, सामर्थ्यानां = शक्तीनाम्, समुदय इव = एकाधारे मिलित्वा आविर्भाव इव, गुणानाम् = दयादाक्षिण्यादीनाम्, सञ्चयः वा = समवाय इव, जगत्पुण्यनिर्माणराशिः = लोकानुष्ठितपुण्यकर्मफलपुञ्जः, आविर्भूय = मूर्तिपरिग्रहं विधाय, स्थित इव। उत्प्रेक्षालङ्कारोऽत्र, मन्दाक्रान्ता नाम वृत्तञ्च।

( १५८ ) घोरं लोके विततमयशो या च वह्नौ विशुद्धि-
लँङ्काद्वीपे कथमिव जनस्तामिह श्रद्दधातु ।
इक्ष्वाकूणां कुलधनमिदं यत्समाराधनीयः
कृत्स्नो लोकस्तदिह विषमे किं स वत्सः करोतु ।। ७।६ ।।

प्रसङ्गः—'रामस्यागो न विद्यते' इति प्रतिपादयन्ती भागीरथी धरित्रीं प्रति व्याहरति ।

अन्वयः—लोके घोरम् अयशः विततम्, या च लङ्काद्वीपे वह्नौ विशुद्धिः ताम् इह जनः कथमिव श्रद्दधातु, इक्ष्वाकूणाम् इदं कुलधनं यत् कृत्स्नः लोकः समाराधनीयः, तद् इह विषमे स वत्सः किं करोतु ।

व्याख्या—लोके = जगति, घोरम्-भीषणम्, अयशः = अपवादः, विततम् = प्रसृतम्, या च लङ्काद्वीपे=दूरवर्तिनि लङ्कानाम्नि द्वीपे, वह्नौ=अग्नौ, विशुद्धिः= सीतायाः निर्दोषत्वपरीक्षा, अभूदिति शेषः, ताम् = वह्निकृतां विशुद्धिम्, इह = अयोध्यायाम्, जनः = लोकः, कथमिव = केन वा प्रकारेण, श्रद्दधातु = प्रत्येतु, इक्ष्वाकूणाम्=इक्ष्वाकुवंशीयानाम्, इदम् = वक्ष्यमाणम्, कुलधनम् = कुलक्रमागतं धनम्, धनवद् रक्षणीयं व्रतमित्याशयः, यत् कृत्स्नः लोकः = निखिलाः प्रजाः, समाराधनीयः = अनुरञ्जनीयः, तत् = तस्मात्, इह विषमे = अस्मिन् संकटे, सः वत्सः = रामः, किं करोतु = सीतानिर्वासनमन्तरेण किमन्यत् कार्यं कुर्यात्, येन लोकाराधनं सम्भवेदिति । समुच्चयालङ्कारोऽत्र, मन्द्राक्रान्ता नाम वृत्तञ्च ।

( १५९ ) क्षुभिताः कामपि दशां कुर्वन्ति मम साम्प्रतम् ।
विस्मयानन्दसन्दर्भजर्जराः करुणोर्मयः ।। ७।१२ ।।

प्रसङ्गः—स्वकीयामवस्थां वर्णयन् रामचन्द्रोऽत्र व्याहरति ।

अन्वयः—क्षुभिताः विस्मयानन्दसन्दर्भजर्जराः करुणोर्मयः साम्प्रतं मम कामपि दशां कुर्वन्ति ।

व्याख्या—क्षुभिताः = क्षोभमधिगताः, चञ्चला इत्याशयः, विस्मयानन्द-सन्दर्भजर्जराः—विस्मयस्य = अद्भुतवस्तुदर्शनजन्यस्य, अन्तःकरणविशेषस्य, आनन्दस्य = पुत्रप्राप्तिजन्यहर्षस्य च, सन्दर्भेण = ग्रन्थनेन, जर्जराः = विशीर्णाः, आकुलीभूताः वा, करुणोर्मयः—करुणस्य = सीतावियोगजन्यशोकातिशयस्य,

ऊर्मयः = तरङ्गाः, साम्प्रतम् = इदानीम्, मम = रामस्य, कामपि अनिर्वाच्याम्, दशाम् = अवस्थाम्, कुर्वन्ति = विदधति । अनुष्टुब्नाम वृत्तमत्र ।

( १६० ) एतौ हि जन्मसिद्धास्त्रौ प्राप्तप्राचेतसावुभौ ।
आर्यतुल्याकृती वीरौ वयसा द्वादशाब्दिकौ ॥ ७।१६ ॥

प्रसङ्गः—लवकुशौ चारुतया निरूप्य लक्ष्मणोऽत्र रामचन्द्रं प्रति व्याहरति ।

अन्वयः—उभौ हि एतौ वीरौ जन्मसिद्धास्त्रौ प्राप्तप्राचेतसौ आर्यतुल्याकृती, वीरौ, वयसा द्वादशाब्दिकौ ।

व्याख्या—उभौ हि=द्वौ एव, एतौ=समीपवर्तिनौ कुशलवौ, जन्मसिद्धास्त्रौ—जन्मनः प्रभृति सिद्धानि = आयत्तीभूतानि, अधिगतानि, अस्त्राणि = जृम्भकास्त्राणि, ययोः तथाविधौ, प्राप्तप्राचेतसौ—प्राप्तः = संस्कारार्थमासादितः, प्राचेतसः = वाल्मीकिः, याभ्यां तथाविधौ, आर्यतुल्याकृती—आर्यस्य = पूज्यस्य भवतः, तुल्या = सदृशी, आकृतिः = आकारः, ययोः तथाविधौ, वीरौ = भवानिव शूरौ, वयसा = जीवनकाले, द्वादशाब्दिकौ—द्वादश अब्दान् व्याप्य भूतौ, द्वादशवर्षीयौ—इत्याशयः, विद्येते—इति शेषः । अनुष्टुब्वृत्तमत्र ।

( १६१ ) मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तं च देवर्षिभिरन्तरिक्षम् ।
आश्चर्यमार्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुदेति ॥ ७।१६ ॥

प्रसङ्गः—नेपथ्यात् 'अपनीयतामातोद्यम्, भो जङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः ! पश्यन्त्विदानीं वाल्मीकिनाभ्यनुज्ञातं पवित्रमाश्चर्यम्' इति समुत्थितं वचनं समाकर्ण्य पुनः निरीक्ष्य च लक्ष्मणोऽत्र व्याहरति ।

अन्वयः—गाङ्गम् अम्भः मन्थाद् इव क्षुभ्यति, अन्तरिक्षं च देवर्षिभिः, व्याप्तम्, आश्चर्यम् ! आर्या देवताभ्यां गङ्गामहीभ्यां सह सलिलाद् उदेति ।

व्याख्या—गाङ्गम्=गङ्गासम्बन्धि, अम्भः = जलम्, मन्थादिव=मन्थनादिव, क्षुभ्यति = चञ्चलं भवति, अन्तरिक्षं च = आकाशं च, देवर्षिभिः = देवैः ऋषिभिश्च, व्याप्तम् = आकीर्णम्, आश्चर्यम् = अद्भुतमेतत्, यत् आर्या = पूज्या सीता, देवताभ्यां गङ्गामहीभ्याम् = भागीरथीधरित्रीभ्याम्, सह = साकम्, सलिलात् = गङ्गायाः जलात्, उदेति = उद्गच्छति । उत्प्रेक्षालङ्कारोऽत्र, इन्द्रवज्रा नाम वृत्तञ्च ।

( १६२ ) पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि सेयं कथा
मङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।
तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम् ॥ ७।२० ॥

प्रसङ्गः—भगवान् रामचन्द्रो नाटकस्यान्ते परमप्रीतः सन् भरतवाक्यमवतारयन्नत्र मुनिपुङ्गवं वाल्मीकिं प्रति व्याहरति ।

अन्वयः—मातेव गङ्गेव च जगतः मङ्गल्या मनोहरा च सा इयं कथा पाप्मभ्यः पुनाति, श्रेयांसि वर्धयति च, बुधाः प्राज्ञस्य शब्दब्रह्मविदः कवेः ( वाल्मीकेः ) ताम् एताम् अभिनयैः विन्यस्तरूपां शब्दब्रह्मविदः प्राज्ञस्य कवेः ( भवभूतेः ) इमां परिणतां वाणीं परिभावयन्तु ।

व्याख्या—मातेव = जननीव, गङ्गेव च = भागीरथीव च, जगतः = लोकस्य, मङ्गल्या = मङ्गलाय हितम्, मङ्गकारिणीत्याशयः, अपि च, मनोहरा = रमणीया, सा = प्रसिद्धा, इयम् = रामायणरूपा, कथा—वाक्यप्रबन्धः, पाप्मभ्यः = पापेभ्यः, पुनाति = शोधयति, श्रेयांसि = कल्याणानि च, वर्धयति = उपचिनोति, बुधाः = पण्डिताः, प्राज्ञस्य = विदुषः, शब्दब्रह्मविदः = शब्दरूपं ब्रह्मवेत्ति तस्य, कवेः = वाल्मीकेः, ताम् = प्रसिद्धाम्, एताम् = रामायणकथाम्, अभिनयैः = चतुर्विधैरवस्थानुकारैः, विन्यस्तरूपाम्—विशेषेण न्यस्तम् = निहितम्, रचितमित्याशयः, रूपम् = स्वरूपम्, यस्याः ताम्, शब्दब्रह्मविदः प्राज्ञस्य कवेः = भवभूतेः, इमां परिणताम् = नाटकरूपेण परिवर्तिताम्, वाणीम् = दृश्यप्रबन्धम्, परिभावयन्तु = पर्यालोचयन्तु । उपमाऽलङ्कारोऽत्र, शार्दूलविक्रीडितं नाम वृत्तञ्च ।

---

## कतिपय परीक्षोपयोगी प्रश्नोत्तरात्मक ग्रन्थ

साहित्यदर्पणालोक, ( प्रश्नोत्तरात्मकः ) । श्री रामजी लाल शर्मा २०—००
काव्यप्रकाश-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री रामजी लाल शर्मा २०—००
चन्द्रालोक-रहस्यम् ( प्रश्नोत्तरात्मकः ) । मानवल्ली तथा वेताल २०—००
शिशुपालवध-रहस्यम् ( प्रश्नोत्तरात्मकः ) । १—४सर्ग । अशोकचन्द्रगौड़ २०—००
सांख्यकारिकादर्शः ( प्रश्नोत्तरात्मकः ) । श्री राजेन्द्रप्रसाद कोठयारी १०—००
अलङ्कारशास्त्रस्येतिहासः (प्रश्नोत्तरात्मकः) । श्रीपरमेश्वरदीन पाण्डेय १०—००
नलचम्पू-रहस्यम् (प्रश्नोत्तरात्मकः)। १-५उच्छ्वास। परमेश्वरदीनपाण्डेय १२—५०
वेदान्तसार-प्रदीपः ( प्रश्नोत्तरात्मकः ) । श्री राजेन्द्रप्रसाद कोठयारी १०—००
मध्यसिद्धान्तकौमुदी-चन्द्रिका ( प्रश्नोत्तरात्मकः ) । विजयमित्र शास्त्री ४०—००
मृच्छकटिक-सोपानम् ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा १५—००
वेणीसंहार-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री परमेश्वरदीन पाण्डेय १२—५०
नैषध-रहस्यम् ( प्रश्नोत्तरात्मकः ) । १—५ सर्ग । श्री रमाशंकर मिश्र २५—००
दशरूपक-रहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री त्रिलोकीनाथ द्विवेदी १५—००
सारसिद्धान्तकौमुदी । 'राका'-संस्कृत-हिन्दी व्याख्या सहित ।
व्याख्याकार—लोकमणि दाहाल । १—४ भाग । प्रत्येक भाग १५—००
भारतीय-संस्कृतिः । लोकमणि दाहाल १५—००
संस्कृतभाषाविज्ञानम् । डॉ० शिवप्रसाद द्विवेदी २०—००
चन्द्रकलानाटिका-रहस्यम् (प्रश्नोत्तरात्मकः)। श्री परमेश्वरदीनपाण्डेय ७—५०
संस्कृतसाहित्येतिहासः ( प्रश्नोत्तरात्मकः ) । श्री परमानन्द शास्त्री १२—५०
रसगङ्गाधर-हृदयम् । ( प्रश्नोत्तरात्मकः ) । श्री ज्ञानचन्द्र त्यागी २०—००
लघुसिद्धान्तकौमुदी-चन्द्रिका ( प्रश्नोत्तरात्मकः ) । विजयमित्र शास्त्री २५—००
कादम्बरी-कलाप्रकाशः ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा २०—००
लघुमञ्जूषारहस्यम् ( प्रश्नोत्तरात्मकः ) । स्वामी रामेश्वर पुरी १०—००
शाकुन्तलरहस्यम् ( प्रश्नोत्तरात्मकः ) । श्री त्रिलोकीनाथ द्विवेदी २०—००
मेघदूत-तत्त्वालोकः (प्रश्नोत्तरात्मकः) । डॉ० अशोकचन्द्र गौड़ शास्त्री १२—५०
महाभाष्यनवाह्निकालोचनम् ( प्रश्नोत्तरात्मकः ) । विजयमित्र शास्त्री १६—००
मुक्तावली-प्रकाशः ( न्यायसिद्धान्तमुक्तावली-प्रश्नोत्तरी ) ।
श्री राजेन्द्रप्रसाद कोठयारी २०—००
औचित्यविचारचर्चा-मञ्जरी ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा १२—५०
वक्रोक्तिजीवितम् ( प्रश्नोत्तरात्मकः ) । डॉ० नरेश झा ७—५०
भारतीयसंस्कृति-सोपानम् (प्रश्नोत्तरात्मकः) । डॉ० शिवप्रसाद द्विवेदी १२—००